श्री

# मुहूर्तगणपति

श्रीदेवदत्तरावलहरिशंकरसूरिसूनुसकलविद्यानिधिज्योतिस्सिद्धान्तज्ञगणपतिकृत

जिसमें

लोकव्यवहार की सिद्धि के लिये सुगम सुललित पदों में मुहूर्तवर्णन कियेगयेहैं

दूसरी बार

स्थान लखनऊ

मुन्शीनवलकिशोर के छापेखाने में छपा

अगस्त सन् १८८५ ई०

॥ श्रीगणेशायनमः ॥ श्रीमत्याकल्पवल्ल्येवहैमवत्यानिरत्ययः ॥ जयत्यालिंगितः कल्पद्रुम
स्समस्तफलदः शिवः ॥ १ ॥ प्रवर्त्तयति सालोकं लोकं यज्ञादिकर्म्मसु ॥ यन्मुहूर्त्ताकरोद्यानवन्देऽहंकाल
मीश्वरम् ॥ २ ॥ श्रीविश्वेगणेशं गुरुचरणानयो यज्ञमूर्त्तिं सुकीर्त्तिं नत्वापित्रोः पदाब्जं निखिलमुनि
वरान् संहिता संप्रणेतॄन् ॥ गर्गात्रिश्रीवशिष्ठांगिरसविरचिताः संहितामूलभूता ज्ञात्वाज्योतिर्निबं-
धानतिललितपदां रत्नमालाविचिंत्य ॥ ३ ॥ संकेतान्सं विहाय व्यवहृतिसुखदं वालबोधाय शीघ्रं
ज्योतिर्ग्रन्थोदितार्थैः सुगमलघुपदैः सिद्धकार्य्यैर्मुहूर्तैः ॥ ज्योतिः सिद्धान्तवेत्ता स्मृतिविविधकला।
शास्त्रपारीणबुद्धिर्गौडो वीशेनमान्यः क्षितिपतितिलकेनार्च्यमानश्च भूयः ॥ ४ ॥ श्रीरामदासजनुषोह-
रिशंकरस्य श्रीरावलस्य तनयो विनयोपपन्नः ॥ ग्रन्थं मुहूर्त्तगणपत्यभिधं विधत्ते विद्यानिधिर्गणपति-
र्गणितागमज्ञः ॥ ५ ॥ अथ संवत्सरानयनम् ॥ शाककालः पृथक्तस्योद्वाविंशत्या २२ हतस्त्वथ ॥ खूनन्दा-
भ्र्यब्धिसु ४२९१ भक्तो वाणशैलगजेन्दुभिः १८७५ ॥ ६ ॥ लब्धियुग्विहृतः षष्ट्या ६० शेषेस्युर्गतवत्सराः ॥
बार्हस्पत्येन्मानेन प्रभवाद्याः क्रमादमी ॥ ७ ॥ अथ षष्टिसंवत्सरनामानि ॥ प्रभवो १ विभवः २ शुक्लः
३ प्रमोदः ४ प्रजापतिः ५ अंगिराः ६ श्रीमुखो ७ भावो ८ युवा ९ धाता १० तथेश्वरः ११ ॥ ८ ॥

बहुधान्यः १२ प्रमाथी १३ चविक्रमो १४ वृषवत्सरः १५ चित्रभानुः १६ सुभानु १७ स्तारणाः १८ पा-
र्थिवो १९ व्ययः २० ॥ ९ ॥ सर्वजित् २१ सर्वधारीच २२ विरोधी २३ विकृतः २४ खरः २५ नन्दनो २६ वि-
जय २७ श्चैवजयो २८ मन्मथ २९ दुर्मुखौ ३० ॥ १० ॥ हेमलम्बी ३१ विलम्बी ३२ चविकारी ३३ शार्वरी ३४
प्लवः ३५ शुभकृ ३६ च्छोभनः ३७ क्रोधी ३८ विश्वावसु ३९ पराभवौ ४० ॥ ११ ॥ प्लवंगः ४१ कीलकः ४२
सौम्यः ४३ साधारणा विरोधकृत ४४ । ४५ परिधावी ४६ प्रमादीस्या ४७ दानन्दो ४८ राक्षसो ४९ ऽनलः ५०
॥ १२ ॥ पिंगलः ५१ कालयुक्त ५२ श्च सिद्धार्थी ५३ रौद्र ५४ दुर्मती ५५ दुन्दुभी ५६ रुधिरोद्गारी ५७ रक्ता-
क्षः ५८ क्रोधनः ५९ क्षयः ६० ॥ १३ ॥ षष्टिः संवत्सराह्येते क्रमेण परिकीर्तिताः ॥ स्वाभिधान समं ज्ञेयं ऽ
फलमेषां मनीषिभिः ॥ १४ ॥ अथ रेवा दक्षिण भागे संवत्सरा नयनम् ॥ शाको द्वादशभिर्युक्तः षष्टि ६०
हृद्वत्सरो भवेत ॥ रेवायां दक्षिणे भागे मानवाख्यः स्मृतो बुधैः ॥ १५ ॥ सप्तनवभि ९ र्युक्तो नर्मदायास्त-
योत्तरे ॥ जैवो वार्हस्पते र्मध्यराशि भोगेन कथ्यते ॥ १६ ॥ अथ प्रभव संवत्सरारम्भः ॥ माघेमासि धनिष्ठा-
याः प्रथमे चरणे गुरुः ॥ यदोदेति तदा श्रेष्ठः प्रभवो वत्सरा ऽ ग्रणीः ॥ १७ ॥ अथ संवत्सराणां युग सं-
ख्यादि ॥ आदौ संवत्सरो ज्ञेयो युगस्या नल देवता ॥ भानु मह्देवतः प्रोक्तो द्वितीयः परिवत्सरः ॥ १८ ॥ इ

वत्सरसंज्ञ स्त्वतृतीयस्तोम दैवतः॥ अनुवत्सरकस्तुर्यः प्राजापत्यस्समीरितः॥ १९॥ तथैव वत्सरो गौ-
री दैवतः सतु पंचमः॥ युगंतैः पंचभिर्वर्षैः षष्टिर्द्वादशभिर्युगैः॥ २०॥ तदीशावह्निजीवेन्द्रपावकस्त्व-
ष्ट्संज्ञकाः॥ अहिर्बुध्न्य स्त्व पितरो विश्वेदेवा निशाकरः॥ पुरुहूता नलौ दस्रौ भगश्चैते क्रमात्स्मृताः॥ २१॥
अथायन संज्ञा॥ मकराद्राशिषट्के र्के प्रोक्तं चैवोत्तरायणम्॥ तद्देव दिवसस्तत्र शुभं कार्य्यं प्रशस्यते २२
षट्सु कर्कादितो ज्ञेयं दक्षिणं ह्ययनं रवेः॥ देवरात्रिस्तदेवात्र प्रोक्तं कार्य्यं न सिध्यति॥ २३॥ मेषाद्युत्तर
गोलस्तु दक्षिणाख्यो घटादितः॥ २४॥ अथ ऋतु संज्ञा॥ वसंतो ग्रीष्म संज्ञश्च तद्वद्वर्षा ततः शरत्॥ हेमं-
तः शिशिरश्चैव षडेते ऋतवः स्मृताः॥ २५॥ मीन मेष गते सूर्य्ये वसंतः परिकीर्तितः॥ वृषभे मिथुने ग्री-
ष्मो वर्षा सिंहे थ कर्कटे॥ २६॥ कन्यायांच तुलायांच शरदृतुरुदाहृतः॥ हेमंतो वृश्चिक द्वंद्वे शिशि-
रो म्रग कुम्भयोः॥ २७॥ अथ मास संज्ञा॥ मासश्चैत्रोथ वैशाखो जेष्ठ आषाढ संज्ञकः॥ ततस्तु श्राव-
णो भाद्रपदोऽथाश्विन संज्ञकः॥ २८॥ कार्तिको मार्गशीर्षश्च पौषो माघोथ फाल्गुनः॥ २९॥ अथ
चैत्रादिमासानां संज्ञा॥ मधु १ श्च माधव २ श्चैव शुक्रः ३ शुचि ४ स्थो नभः ५ नभस्य ६ इष ७ ऊर्ज-
श्च ८ सह ९ श्चाथ सहस्यकः १० ॥ ३० ॥ तप ११ स्तथा तपस्य १२ श्च मास संज्ञाः क्रमादमूः॥ मासोदर्शावधि-

श्चाब्दः सौरः संक्रमणाद्रवेः ॥ ३१ ॥ त्रिंशद्दिनः सावनिको नाक्षत्रो विधुभक्रमात् ॥ प्रोक्तकार्य्यास्त्विमे
मासा विज्ञेया कोविदैः सदा ॥ ३२ ॥ सौरे कार्यं विवाहादि ग्रहचारादिकं तथा ॥ सावने गर्भहत्यादि नाक्षत्रे
मेषगर्भजम् ॥ ३३ ॥ व्रतयज्ञादिकं चान्द्रे मासे परिणायः क्वचित् ॥ चान्द्रस्तु द्विविधो मासो दर्शान्तः पौ-
र्णिमांतिमः ॥ ३५ ॥ देवार्थे पौर्णिमास्यंतो दर्शान्तः पितृकर्मणि ॥ ३४ ॥ अथ पक्षसंज्ञा ॥ शुक्लकृ-
ष्णावुभौ पक्षौ दैवे पित्र्ये च कर्मणि ॥ ग्राह्यौ तथा शुभं सर्वं शुक्लपक्षे प्रशस्यते ॥ ३६ ॥ इति श्री मद्दैवज्ञ
रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्तगणपतौ संवत्सरादि प्रकरणं समाप्तम् ॥ १ ॥ अथ
तिथिप्रकरणं ॥ प्रतिपच्च द्वितीया च तृतीया तदनंतरम् ॥ चतुर्थी पंचमी षष्ठी सप्तमी चाष्टमी तथा ॥ १ ॥
नवमी दशमी चैवैकादशी द्वादशी ततः ॥ त्रयोदशी ततः प्रोक्ता ततो ज्ञेया चतुर्दशी ॥ २ ॥ पौर्णिमा शुक्ल
पक्षेंत्या कृष्णपक्षे त्वमा स्मृता ॥ तिथीशा वह्नि धात्रंबा हेरंबोरगषण्मुखाः ॥ ३ ॥ रवीशं वायमो
विश्वे हरि स्मर शिवेन्द्रवः ॥ अमावास्या तिथेरीशाः पितरः संप्रकीर्तिताः ॥ ४ ॥ नन्दा भद्रा जया रिक्ता
पूर्णाश्च प्रतिपन्मुखाः ॥ षष्ठ्याद्यमा क्रमाज्ज्ञेया तथैवैकादशी मुखाः ॥ ५ ॥ असन्मध्यं शुभं शुक्ले ५
तिथीनां पञ्चकं क्रमात् ॥ कृष्णपक्षे शुभं मध्यं नेष्टं ज्ञेयं शुभे सदा ॥ ६ ॥ अथ नन्दादि तिथि

कृत्यम्॥ गीतंनृत्यं तथा क्षेत्रं चित्रोत्सव गृहादिकम्॥ वस्त्रालंकारशिल्यादि नन्दाख्यासु शुभं स्मृ-
तम्॥ ७ ॥ विवाहो पनयो यात्रा भूषा शिल्प कलादिकम्॥ गजाश्व रथ कृत्यंच भद्रातिथिषु सिद्धि
दम्॥ ८ ॥ सैन्यं संग्राम शस्त्रादि यात्रोत्सव गृहादिकम्॥ भैषज्यं चैव वाणिज्यं सिद्ध्येत्सर्वं ज-
यासु च ॥ ९ ॥ शत्रूणां वधबन्धादि विषशस्त्राग्नियोजनम्॥ कर्तव्यं तत्र रिक्तायां नैव सन्मंग-
लं क्वचित्॥ १० ॥ व्रतबन्धविवाहादि यात्रा राज्याभिषेचनम्॥ शान्तिकं पौष्टिकं कर्म पूर्णा-
सुकिल सिद्ध्यति॥ ११ ॥ अथ सामान्यतः शुभाशुभ तिथय उच्यन्ते॥ द्वितीया पञ्चमी चैव तृतीया
सप्तमी तथा॥ दशम्येकादशी कृष्णा प्रतिपच्च त्रयोदशी॥ १२ ॥ पौर्णिमा तिथयो ह्येताः सर्वकार्ये
शुभावहाः॥ अन्यास्तु तिथयो नेष्टाः प्रोक्तकृत्ये शुभा मताः॥ १३ ॥ कृष्णा चतुर्दशी शुक्ला प्रति
पद्दर्श संज्ञकाः॥ एताः शुभेषु कार्येषु वर्जनीयाः प्रयत्नतः॥ १४ ॥ अथ पक्षरंध्र तिथयः॥ चतु-
र्थी रसवस्वंक द्वादशी शक्र संमिताः॥ ४ । ६ । ८ । ९ । १२ । १४ तिथयः पक्षरंध्राख्या स्त्या-
ज्याः सर्वेषु कर्मसु॥ १५ ॥ एतासु वसुनन्देन्द्रतत्त्वदिक् शरसंमिताः। ८ । ९ । १४ । २५ । १० । ५ । हेयाः सुमदि
मानाद्यः क्रमाच्छेषास्तु शोभनाः॥ १६ ॥ अथाशुभाख्याः तिथयः॥ मेषादीनां चतुर्णांहि च

| राशि | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथि | १ | २ | ३ | ४ | ६ | ७ | ८ | ९ | ११ | १२ | १३ | १४ |
| पूर्णा | ५ | ५ | ५ | ५ | १० | १० | १० | १० | १५ | १५ | १५ | १५ |
| वर्ग | १ | २ | ३ | ४ | १ | २ | ३ | ४ | १ | २ | ३ | ४ |

तस्त्वः प्रति पन्मुखाः ॥ तिथय स्तच्चतुष्क-
स्य पंचमी परिकीर्तिता ॥ १७ ॥ सिंहकन्या
तुलालीनां षष्ठ्या द्यास्तिथयः क्रमात् ॥
दशान्ये तच्चतुष्कस्य तथा चैकादशीमुखाः
॥ १८ ॥ चतस्रो धनुरादीना मेतेषां पूर्णि-
माप्यमा ॥ याप युक्तस्य राशेर्या तिथिः सान शुभावहा ॥ १९ ॥ अथ प्रत्येक तिथि कृत्यम् ॥ वि-
वाहोत्सव यात्रा च प्रतिष्ठा वास्तुकर्म च ॥ कुर्याच्चौलादिकं कृष्णे न शुक्ले प्रति पत्तिथौ ॥ २० ॥
राज्य कार्यं विवाहादि मंगलं वास्तु भूषणम् ॥ व्रतबन्धः प्रतिष्ठा च द्वितीया यां तिथौ स्मृतम् ॥
२१ ॥ अन्न प्राशन संगीत विद्या सीमंत शिल्पकम् ॥ द्वितीया प्रोक्त मखिलं तृतीया यां प्रशस्यते
॥ २२ ॥ शत्रूणां वधबंधादि विष शस्त्राग्नियोजनम् ॥ कर्तव्यं तच्चतुर्थ्यां तु नैव सन्मंगलं क्वचित् ॥
२३ ॥ शुभकर्माणि सर्वाणि स्थिरराशि चरराशि च ॥ ऋणादानं विनायांति सुसिद्धिं पञ्चमी दिने ॥
२४ ॥ दन्तकाष्ठ गमाभ्यंगांस्त्यक्त्वा षष्ठ्यां शिल्पकर्म च ॥ रणवास्तु विभूषादि यस्यां सिद्ध्यति मंगलम् २५

गजकृत्यं विवाहादि संगीतं वस्त्र भूषणम् ॥ यात्रा प्रवेश संग्रामाः सिद्ध्येयुः सप्तमी तिथौ २६
नृत्यं स्त्री रत्न भूषादि संग्रामाः शस्त्र धारणम् ॥ वास्तु शिल्पादिकं कार्यं मष्टम्यां सिद्धिमाप्नुया-
त् ॥ २७ ॥ विग्रहः कलहो द्यूतं मद्य मारवेटक स्तथा ॥ विषाग्नि शस्त्र कृत्यञ्च नवम्यां सिद्धि
माप्नुयात् ॥ २८ ॥ विवाहादि शुभं कार्य्यं भूषा यात्रा प्रवेशनम् ॥ गजाश्व नृप कार्य्याणि सि-
ध्यंति दशमी दिने ॥ २९ ॥ व्रत बंधो विवाहादि रणाः शिल्पं सुरोत्सवः ॥ गमा गमौ विभूषादि हो-
का दश्यां प्रशस्यते ॥ ३० ॥ चरस्थिराणि कार्य्याणि विवाह व्रत बन्धनम् ॥ द्वादश्यां तत्र कुर्वीत
तैल यात्रादिकं त्यजेत् ॥ ३१ ॥ यात्रा प्रवेश संग्राम वस्त्र भूषण मंगलम् ॥ व्रतबंधं विनाऽन्यत्र शुभा
शुक्ला त्रयोदशी ॥ ३२ ॥ विषबंधाग्नि शस्त्रादि प्रकुर्याद्दुष्ट कर्मच ॥ चतुर्दश्यां शुभं कर्म क्षौरं यात्रां विव
र्जयेत् ॥ ३३ ॥ मांगल्यं भूषणां शिल्पं प्रतिष्ठां यज्ञ कर्मच ॥ संग्रामो गृह कृत्यंच पौर्णमास्यां प्रसिद्ध्य-
ति ॥ ३४ ॥ अग्न्याधानं महादानं पितृयागादिकं चयत् ॥ प्रोक्तं कर्म प्रकर्तव्यं दर्शेनान्या शुभा क्रिया ३५
अथ दंत धावने निषिद्ध तिथयः ॥ अमायां च तथा षष्ठ्या मेकादश्यां रवेर्दिने ॥ प्रति पद्युत्तरे यांसान्न ८
कुर्य्याद्दंत धावनम् ॥ ३६ ॥ अथामलक स्नाने निषिद्धाः ॥ दशमी सप्तमी दर्श द्वितीया नवमी दिने

मु.ग. त्रयोदश्यांतथा नैव स्नायादामलकैर्नरः॥ ३७॥ अथोक्तकार्ये निषिद्धाः॥ क्षौरे चतुर्दशीं चैवष- १
९ ष्टीं तैले पले ऽष्टमीम्॥ दर्शे स्त्री सेवने जह्याद्यदीच्छेद्दीर्घजीवितम्॥ ३८॥ अथ प्रतिपदादि दर्शांता-
सु षोडश तिथिषु वर्ज्यानि॥ त्यजेत्प्रतिपदाद्यासु कूष्मांडं बृहती फलम्॥ लवणं मूलकं चैव पन-
सं तैलसेवनम्॥ ३९॥ धात्री फलं नारिकेलं फलं तुंब्याः पटोलकम्॥ निष्पावान्नं मसूरांश्च वृंताकं
माक्षिकं क्रमात्॥ ४०॥ अमायां सुरतं चैव पौर्णमास्यां दुरोदरम्॥ ४१॥ अथ प्रसंगाद्युगादि म-
न्वादि तिथयः॥ नवमी कार्तिके शुक्ला वैशाखे च तृतीयका॥ त्रयोदश्याश्विने कृष्णा तथा दर्श-
श्च फाल्गुने॥ ४२॥ कार्तिके तु कृतारंभस्त्रेतारंभस्तु माधवे॥ फाल्गुने द्वापरारम्भस्त्वारंभश्चाश्वि-
ने कलेः॥ ४३॥ क्रमाच्च मुहुर्विविधाः पितरस्तत्र देवताः॥ तिलान्नलवणं सौवर्णं गाश्च दद्याद्यु-
गादिषु॥ ४४॥ एते युगादयः पुण्याः शुभे वर्ज्या मनीषिभिः॥ तत्राक्षय्य तृतीया तु सर्वकार्येऽति
शोभना॥ ४५॥ आश्विने नवमी शुक्ला माघमासे तु सप्तमी॥ भाद्रे चैत्रतृतीया च कार्तिके द्वादशी तथा
॥ ४६॥ आषाढे दशमी प्रोक्ता ज्येष्ठमासे तु पूर्णिमा॥ आषाढी फाल्गुनी चैत्री कार्तिकी पौर्णिमासी ९
तथा॥ ४७॥ भाद्रे कृष्णाष्टमी प्रोक्ता पौषे त्वेकादशी सिता॥ अमा भाद्रपदे मासि मन्वाद्यास्तिथयः

स्त्विमाः ॥ ४८ ॥ अत्रमासा सुराकांता विज्ञेयागणकोत्तमैः ॥ ४९ ॥ अथार्द्धोदय योगः ॥ मा-
घेमासिरवौदर्शे व्यतीपाते श्रवान्विते ॥ अर्द्धोदयाभिधो योगः सूर्य्य पर्व शताधिकः ॥ अय युक्तो दि-
वा योगः किंचिन्न्यूनो महोदयः ॥ ५० ॥ अथ गज छाया ॥ पितृपक्षे त्रयोदश्यां हस्तेऽर्केऽब्जे मघागते
गजच्छायाभिधो योगः श्राद्धेऽक्षय्य फलप्रदः ॥ ५१ ॥ अथ कपिला षष्ठी ॥ आश्विने कृष्णपक्षे च
यस्यां भौमोऽथ रोहिणी ॥ व्यतीपातस्तदा षष्ठी कपिलानंत पुण्यदा ॥ ५२ ॥ अथ प्रसंगादगस्त्यो-
दयः ॥ अस्तम्न पलभा संख्यै रंशैर्युक्ता वसुग्रहाः ॥ तादृशेऽर्के मुनेर्ज्ञेय उदयः कुम्भ जन्मनः ।
॥ ५३ ॥ इति श्री दैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृतौ मुहूर्त्त गणपतौ तिथि प्र-
करणं समाप्तम् ॥ २ ॥ अथ वार प्रकरणम् ॥ आदित्यश्चन्द्रमा भौमो बुधश्चाथ बृहस्पतिः ॥ शु-
क्रः शनैश्चरश्चैव वासराः परिकीर्तिताः ॥ १ ॥ शिवो दुर्गा गुहो विष्णुर्ब्रह्मेन्द्रः कालसं[illegible]कः ॥
सूर्य्यादीनां क्रमादेते स्वामिनः परिकीर्तिताः ॥ २ ॥ गुरुश्चन्द्रो बुधः शुक्रः शुभावाराः शुभेस्मृताः
क्रूरास्तु क्रूर कृत्येषु ग्राह्या भौमार्क सूर्य्यजाः ॥ ३ ॥ स्थिरः सूर्य्यश्चरश्चन्द्रो भौमश्चोग्रो बुधः १०
समः ॥ लघुर्जीवो मृदुः शुक्रः शनिस्तीक्ष्णः समीरितः ॥ ४ ॥ अथ प्रत्येक वार कृत्यम् ॥

राज्याभिषेक मांगल्यं यानमन्त्रास्त्रमौषधम् ॥ रवौ ॥ स्त्राः यरायाग्नि सेवाद्यं सुवर्णादिरवौ स्मृ-
तम् ॥ ५ ॥ शंख मौक्तिक रौप्यादि भूषागीतं क्रतुः कृषिः ॥ भोज्यं स्त्री क्षु विकारांभः कर्मोक्तं
सोमवासरे ॥ ६ ॥ भेदस्तेयानृतं शाठ्यं विषशस्त्राग्नि घातनम् ॥ प्रवालकरहेमाद्य मे तत्कु-

| र॰ | चं॰ | मं॰ | बु॰ | बृ॰ | शु॰ | श॰ | वाराः |
|---|---|---|---|---|---|---|---|
| शिव | दुर्गा | गुह | विष्णु | ब्रह्मा | इन्द्र | काल | स्वामिनः |

र्य्यात्कुजेहनि ॥ ७ ॥ कलानैपुणय वाणिज्यं संधिव्यायाम
सेवनम् ॥ वेदाध्ययन लेखाद्यादि विदध्या बुधवासरे ॥ ८ ॥
यज्ञो धर्म क्रिया विद्या मांगल्यं पौष्टिकं गृहाः ॥ यात्रा भैषज्य-
भूषाद्या विधेया गुरुवासरे ॥ ९ ॥ गीतं स्त्री रत्न शय्यादि वस्त्रं भूषोत्सव क्रियाः ॥ भूपराय कृषि कोशा-
द्याः सर्वे सिद्ध्यंति भार्गवे ॥ १० ॥ गृह प्रवेशदीक्षादि गजबन्धः स्थिरक्रियाः ॥ दास शस्त्रानृतं स्तेयमे-
तत्सिध्ये च्छनैश्चरे ॥ ११ ॥ खेटस्योपचयस्थस्य वारे कार्य्यं शुभावहम् ॥ तदेवोपचयस्थस्य रत्नेनापि
न सिद्ध्यते ॥ १२ ॥ अथ तात्कालिकवारकृत्यार्थं होरा प्रोच्यते ॥ स्वदेशामध्य रेखांतर्योजनैः याद्वर्जि-
तैः ॥ तावत्पलैर्युतोना : स्युस्तिथयः १५ परपूर्ववतः ॥ १३ ॥ तद्दिनार्द्धांतर पलै रूनाधिक्ये दिनार्द्धतः ॥ ११
ऊर्ध्वं चाधः क्रमाद्वारप्रवेशस्तपनोदयात् ॥ १४ ॥ वारारंभाद्गतानाड्यो द्विघ्नाः २ पंचविभाजिताः ५ लब्धां

केगत होराः स्युर्वासरेशादितिक्रमात् ॥ २५ ॥ रविः शुक्रो बुधश्चंद्रः शनिर्जीवस्ततः कुजः ॥ एवं क्रमेण वि-
ज्ञेयाः कालहोरेश्वरा ग्रहाः ॥ २६ ॥ यस्मिन्वारे तु यत्कृत्यं पूर्वाचार्यैः सदा हृतम् ॥ तत्कृत्यं तस्य खेटस्य
होरायां खलु सिद्ध्यति ॥ २७ ॥ वारदोषाश्च ये प्रोक्ता रात्रौ न प्रभवंति ते ॥ शनिभौमार्कवारेषु विशे-
षादिति केचन ॥ २८ ॥ तैलाभ्यंगे वारफलम् ॥ रविस्तापं शशी कांतिं मृतिं भौमो बुधः श्रियम् ॥
वित्तहानिं गुरुः शुक्रो विपत्तिं च सुखं शनिः ॥ २९ ॥ तैलाभ्यंगान्मनुष्याणां कुरुते नात्र संशयः ॥
रवौ भौमे व्यतीपाते संक्रान्तौ वैधृतावपि ॥ २० ॥ षष्ठ्यष्टम्योश्च विष्ट्यां च तैलाभ्यंगो न पर्वसु २१
॥ अथ तैलाभ्यंगे दोषापवादः ॥ तैलाभ्यंगो न दोषाय प्रत्यहं क्रियते च यः ॥ उत्सवे वात रोगे वा श्र-
त्रवाचनिकोपिवा ॥ २२ ॥ भार्गवे गोमयं भौमे मृदं दूर्वां बृहस्पतौ ॥ रवौ पुष्पं निधायांतस्तैलाभ्यंगो
न दोषकृत् ॥ २३ ॥ मंत्रितं क्वथितं तैलं सार्षपं पुष्पवासितम् ॥ द्रव्यांतरयुतं वापि नैव दुष्येत्कदाच-
न ॥ २४ ॥ इति श्री मद्दैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्त्त गणपतौ वार प्रकरणम्
समाप्तम् ॥ ३ ॥ अथ नक्षत्र प्रकरणम् ॥ अश्विनी भरणी चैव कृत्तिका रोहिणी मृगः ॥ आ- १२
र्द्रा पुनर्वसुः पुष्यस्ततः श्लेषा मघा तथा ॥ १ ॥ पूर्वा फाल्गुनिका तस्मादुत्तरा फाल्गुनी ततः ॥

हस्तश्चित्रा तथा स्वाती विशाखा तदनन्तरम् ॥ २ ॥ अनुराधा ततो ज्येष्ठा ततो मूलं निगद्यते ॥ पूर्वा-
षाढोत्तराषाढा त्वभिजिच्छ्रवणा ततः ॥ ३ ॥ धनिष्ठा शततारारव्यं पूर्वभाद्रपदा ततः ॥ उत्तरा-
भाद्रपाच्चैव रेवत्येतानि भानि च ॥ ४ ॥ अथ नक्षत्रेशाः ॥ अश्विनी दस्र देवत्या भरणी यमदैवता ॥
आग्नेयी कृत्तिका प्रोक्ता विधाता रोहिणीश्वरः ॥ ५ ॥ मृगशीर्षे श्वरश्चन्द्र स्तथैवार्द्रेश्वरः शि-
वः ॥ अदितिस्तु पुनर्वस्वोः पतिः पुष्यस्य वाक्पतिः ॥ ६ ॥ आश्लेषाधिपतिः सर्पो मघेशाः पितरः
स्मृताः ॥ भगश्च पूर्वा फाल्गुन्या उफायाः पतिरर्य्यमा ॥ ७ ॥ हस्तस्याधिपतिः सूर्य्यस्त्वष्टा चित्रा-
धिपस्य च ॥ स्वातेश्च दैवतं वायुर्विशाखेन्द्राग्नि देवता ॥ ८ ॥ अनुराधेश्वरो मित्रो ज्येष्ठाया इन्द्र
उच्यते ॥ मूलस्य दैवतं रक्षः पूर्वाषाढे श्वरो जलम् ॥ ९ ॥ उषाया दैवतं विश्वे विधिश्चाऽभिजिता-
धिपः ॥ श्रवणाधिपतिर्विष्णुर्धनिष्ठा वसुदेवता ॥ १० ॥ वरुणः शततारायाः पूषेशः कथितोऽजपा-
त् ॥ अहिर्बुध्न्य स्तयोभायाः पूषोक्तो रेवती पतिः ॥ ११ ॥ अथ सामान्यतः शुभाशुभनक्षत्राणि ॥ रोहिण्य-
श्विमृगाः पुष्यो हस्तश्चित्रोत्तरात्रयम् ॥ रेवती श्रवणा चैव धनिष्ठा च पुनर्वसुः ॥ १२ ॥ अनुराधा तथा 
स्वाती शुभान्येतानि भानि च ॥ सर्वाणि शुभकार्य्याणि सिध्यन्त्येषु च मेषु च ॥ १३ ॥ पूर्वात्रयं

विशाखा च ज्येष्ठार्द्रा मूलमेव च ॥ शततारामिषेष्वेव कार्य्यं साधारणांस्तथा ॥ १४ ॥ भरणी कृत्ति-
का चैव मघाश्लेषा तथैव च ॥ अत्युग्रं दुष्ट कार्य्यं यत्प्रोक्तमेषु विधीयते ॥ १५ ॥ अथ प्रत्येकं नक्षत्रकृत्य-
म् ॥ यात्रौषध विभूषाश्व विद्या शिल्पकलादिकम् ॥ गज कार्यं विवाहांगं मांगल्यं चाश्विने चरेत् ॥ १६ ॥
साहसं दारुणं शत्रुनाशनं विषबंधनम् ॥ भरण्यां कूप कर्म्माद्यमग्निदाहादिकं चरेत् ॥ १७ ॥ कृत्ति-
कायां सदा कुर्य्यात्साहसाग्नि परिग्रहम् ॥ रिपोर्वधं विवाहं च लोह मरायो ऽश्व कर्म तु ॥ १८ ॥ रोहि-
ण्यां पौष्टिकं कुर्य्याद्विवाहं धन संग्रहम् ॥ प्रासादं सुर कृत्यञ्च मांगल्यं भूषणादिकम् ॥ १९ ॥ वि-
वाहोपनयो यात्रा मृगशीर्षे हु शोभनम् ॥ सुरसंस्थापने वास्तु क्षेत्रारम्भादि सिद्ध्यति ॥ २० ॥ आर्द्रा-
यां विग्रहं कुर्याद्बंधनं छेदनं वधम् ॥ विष संध्यग्नि विद्याद्यं दारुणोच्चाटनं तथा ॥ २१ ॥ शान्तिकं
पौष्टिकं यात्रा भूषा वास्तु व्रतादिकम् ॥ वाहनं कृषि विद्याद्यं पुनर्वस्वौ विधीयते ॥ २२ ॥ चरस्थि-
राणि कार्याणि शान्तिकं पौष्टिकोत्सवम् ॥ विवाहं वर्जयित्वाऽन्यत्समस्तं पुष्यमे चरेत् ॥ २३ ॥
आश्लेषायां रिपोर्घातं वाणिज्यं साहसं तथा ॥ विष सर्पादि कृत्यं च स्तेयं कापट्यमाचरेत् ॥ २४ ॥ १४
मघायां पैतृकं कार्य्यं तथा शस्त्यादि रोपणम् ॥ जलाश्रयं विवाहं च कुर्य्याद्युद्धादि साहसम् २५

बंधनंदारुणांशिल्पंकापट्यंरणकर्मच ॥ पूर्वाफाल्गुनिकायांतुचित्रकर्मादिसाधयेत् ॥ २६ ॥ विवा-
होव्रतबंधश्चस्थिरकर्मविभूषणम् ॥ उत्तराफाल्गुनीभेस्याद्गृहारम्भप्रवेशनम् ॥ २७ ॥ यात्रावि-
द्याविवाहादिविभूषाम्बरमौषधम् ॥ गृहारम्भंप्रतिष्ठांचविदध्याद्धस्तभेऽखिलम् ॥ २८ ॥ शान्तिकं
पौष्टिकंशिल्पंवास्तुभूषांबरादिकम् ॥ व्रतबंधंस्थिरंकार्य्यंचित्रायांकृषिकर्मच ॥ २९ ॥ सुरसद्म-
विधानञ्चमंगलाम्बरभूषणम् ॥ बीजारोपञ्चसंग्रामंशस्त्राद्यंस्वातिभेचरेत् ॥ ३० ॥ वस्तुसंग्र-
हणंभूषांशिल्पंचित्रंप्रहारकम् ॥ रथकार्य्यंविशाखायांकुर्यादौषधसेवनम् ॥ ३१ ॥ पाणिग्रहं
व्रतंयात्रांगजाश्वाम्बरभूषणम् ॥ चरस्थिरंशुभंकुर्यादनुराधाऽभिधेऽखिलम् ॥ ३२ ॥ रिपूणां
हननेभेदेप्रहारेलोहकर्मणि ॥ शिल्पेस्नेहविधौचित्रेज्येष्ठाचैवसमीरिता ॥ ३३ ॥ मूलभेचव-
नारामाःसंग्रामाःसन्धिविग्रहौ ॥ वापीकूपतडागाद्याविधेयाःकृषयोपिच ॥ ३४ ॥ वापीकूपा-
दिकंकृष्यंविग्रहंबंधमोक्षणम् ॥ क्रूरकार्य्यंद्रुमच्छेदंपूर्वाषाढाभिधेचरेत् ॥ ३५ ॥ स्थापनंमं-
डनंवास्तुनिवेशंचप्रवेशनम् ॥ बीजारोपविभूषाद्यमुत्तराषाढभेचरेत् ॥ ३६ ॥ देवतास्थापनं
गेहंपौष्टिकंशिल्पकर्मच ॥ मांगल्योपनयंचित्रंशान्तिकंश्रवणेचरेत् ॥ ३७ ॥ चौलेचो-

पनये युद्धे गजाश्वोष्ट्रादि कर्माणि ॥ गेहोद्यान विभूषा सुखनिष्ठा कथितोत्तमा ॥ ३८ ॥ गजा-
श्व रथ नौकानां रौप्य मुक्ता फल स्रजाम् ॥ वास्तु संग्राम शस्त्राणां कार्यन्तच्छत भे चरेत् ॥ ३९ ॥
पूर्वा भाद्र पदे शिल्पं साहसं छेदनं कृषिम् ॥ विक्रयं महि षोष्ट्राणां जल यंत्रादिकं शुभम् ॥ ४० ॥
विवाहो व्रत बंधश्च देवता स्थापनं गृहम् ॥ वास्तु कर्माभिषेकश्चोत्तरा भाद्र पदे भवेत् ॥ ४१ ॥
गेहं देवालयं भूषा विवाहो व्रत बंधनम् ॥ जल स्थलादिकं कार्य्यं रेवत्यां सिद्धि माप्नुयात् ॥ ४२ ॥
अथ पुष्य प्रशंसा ॥ पापैर्विद्धे युते हीने चन्द्र तारा बलेपि च ॥ पुष्ये सिद्ध्यन्ति सर्वाणि कार्य्याणि
मंगलानि च ॥ ४३ ॥ अथ नक्षत्राणां विशेष संज्ञा तत्कृत्यञ्च ॥ ध्रुव स्थिर मिति ख्यातं रोहि-
णी चोत्तरात्रयम् ॥ तत्रामर गृह ग्रामाऽभिषेकाद्याः स्थिर क्रियाः ॥ ४४ ॥ मृगश्चित्रानुराधा च
रेवती मृदु मैत्रकम् ॥ तत्र गीतं रतिं कुर्याद्भूषां मांगल्य मंबरम् ॥ ४५ ॥ पुष्याश्विन्यभिजि
द्धस्तं लघु क्षिप्र मुदाहृतम् ॥ तत्र भूषौषध ज्ञानं गमनं शिल्पकं रतिः ॥ ४६ ॥ ज्येष्ठार्द्रा मूल माश्लेषा
१७ तीक्ष्णं दारुण मुच्यते ॥ तत्र भेदो बधो बंधो मंत्र भूतादि साधनम् ॥ ४७ ॥ श्रवणादि त्रिभं स्वाती २६
पुनर्वसु चरं चलम् ॥ तस्मिन्वाजि गजारोहो वाटिका गमनादिकम् ॥ ४८ ॥ भरणी च मघा पूर्वा क्रूर-

सुग्र मुदाहृतम् ॥ विष शस्त्राग्नि घातादि तत्र छेद विनाशनम् ॥ ४९ ॥ विशाखा कृत्तिका सौम्यो-
मिश्रं साधारणं स्मृतम् ॥ नीलोत्सर्गोऽग्निकार्य्यं च मिश्रं तत्र च सिध्यति ॥ ५० ॥ अथाऽधऊर्ध्वतिर्य-
ङ्मुख नक्षत्राणि तत्कृत्यानि च ॥ मूलाश्लेषा मघा पूर्वा विशाखा भरणी द्वयम् ॥ अधो मुखानि भा-
न्यत्र कर्म्म सिद्धे दधो मुखम् ॥ ५१ ॥ वापी कूप तड़ागादि खातस्तत्र विधीयते ॥ निधि क्षेपोत्सतीरं-
ध्र प्रवेशो गणितं तथा ॥ ५२ ॥ पुनर्वस्वनुराधाख्यं ज्येष्ठा हस्त त्रयं मृगः ॥ रेवती द्वितयं तिर्यग्वक्त्रं
तस्मिंस्तत्क्रिया क्रियाः ॥ ५३ ॥ गजाश्व रथ तंत्राणां नौकायाश्च गमादिकम् ॥ शिविका हल यंत्राणां
कार्यं तिर्यङ्मुखे शुभे ॥ ५४ ॥ उत्तरा रोहिणी चैव पुष्यार्द्रा श्रवणा त्रयम् ॥ एतान्यूर्ध्वमुखान्यत्र कर्मो-
क्तं तद्दृशां बुधैः ॥ ५५ ॥ प्रासाद ध्वज छत्र प्राकार गृहतोरणम् ॥ नृपाभिषेक आरम्भ उत्साह-
स्तत्सर्ववज्ञासे ॥ ५६ ॥ अथाश्विन्यादि भानां तारका संख्या ॥ राम ३ रामा ३ ग ६ बाणा ५ गि-
३ भू १ वेदा ४ ग्नि ३ शरा ५ शरा ५ नेत्रा २ श्वि २ बाणा ५ भू १ चन्द्रा १ वेद ४ वेदा ४ ग्नि ३ शं-
१८ कराः ११ ॥ ५७ ॥ दृग २ श्वि २ रामा ३ रामा ३ ब्धि ४ शतं १०० नेत्रे २ क्षरा २ रदाः ३२ अश्विनी प्रमुखा- १७
नां तु तारा संख्या यथाक्रमम् ॥ ५८ ॥ अथ नक्षत्राणां स्वरूपाणि ॥ अश्विन्यश्वि मुखाकारा भरणी

भगासन्निभा ॥ कृत्तिका चतुरस्राकारा रोहिणी शकटाकृतिः ॥ ५९ ॥ मृगोमृगमुखाकार स्तथार्द्रा मणि-
सन्निभा ॥ पुनर्वसुर्गृहाकारी पुष्योबाणसमाकृतिः ॥ ६० ॥ चक्राकृति रथाश्लेषा मघाशालो-
पमास्मृता ॥ पूफा तु शयनाकारा तथैवोत्तरफाल्गुनी ॥ ६१ ॥ ज्ञेयो हस्ता कृतिर्हस्तश्चित्रा मौक्तिक
सन्निभा ॥ प्रवालसदृशी स्वाती विशाखा तोरणाकृतिः ॥ ६२ ॥ बलितुल्यानुराधा स्याज्ज्येष्ठा कुण्डल
सन्निभा ॥ सिंहपुच्छनिभं मूलं पूर्वाषाढा तु तल्पवत् ॥ ६३ ॥ उत्तरा गजदंताभा त्रिकोणांचाभिजित्स्मृ
तम् ॥ श्रवणास्त्रिपदाकारो धनिष्ठा मर्दलाकृतिः ॥ ६४ ॥ शतभं वर्तुलाकारं यमाभा पूर्वभाद्रपात् ॥
उत्तरा शयनाकारा मर्दलाभा तु रेवती ॥ ६५ ॥ अथ नक्षत्रचारः ॥ पूर्वाषाढाद्वयं मूलानुराधार्द्रा मृगः
करः ॥ ज्येष्ठा पुनर्वसुस्तेषां तारा दक्षिणगाः सदा ॥ ६६ ॥ रोहिणी कृत्तिका श्लेषा रेवती श्रवणत्रयम्
पुष्य चित्रा नवैतानि मध्यचारीणि भानि हि ॥ ६७ ॥ अश्विनी द्वितयं स्वाती विशाखा फाल्गु-
नी द्वयम् ॥ मघा भाद्रपदा युग्ममेतान्युत्तरगानि च ॥ ६८ ॥ अथ नभो मध्यस्थादुदयर्क्षज्ञानम्
विशाखादि त्रयं पूर्वाषाढा श्लेषार्द्रभे यदा ॥ रोहिणीभं नभो मध्ये तदा चाष्टमभोदयः ॥ ६९ ॥
नव मर्क्षोक्ष मूले च मृगे चांबरमध्यगे ॥ शेषे मध्यगते व्योम्नः सप्तमर्क्षोदयो भवेत् ॥ ७० ॥

अथ रविभान्मध्यमादुदय भाद्गतरात्रिज्ञानम् ॥ रविभादस्तभं व्येकं मध्यमं चाष्टहीनकम् ॥ उदयङ्गंति-
थि १५ हीनं वा नख २० घ्नं नव ९ भाजितम् ॥ ७१ ॥ लब्धरात्रेर्गतानाड्यः शेषं लब्धं फलानि च
॥ ७२ ॥ अथवा ॥ अस्तभादर्क भं तिथ्या १५ हीनं मध्यमतोष्टभिः ॥ उदयर्क्षात्तथा व्येकं १ विं-
शति २० घ्नं ग्रहैर्भजेत् ॥ ७३ ॥ लब्धा ग्रहादिका ज्ञेया शेषा रात्रिः स्फुटाथवा ॥ सप्त ७ वसु ८
नव हीनं च ह्यस्तोदय प्रमाणातः ॥ मध्यमे तु विशेषोयं ज्ञेया युक्ता विचक्षणैः ॥ ७४ ॥ अथ प-
ञ्चकम् ॥ धनिष्ठार्द्धोत्तरं पञ्च ऋक्षेष्वेषु त्यजेद्बुधः ॥ याम्य दिग्गमनं शय्या वितानं गेह गोपनम् ॥
७५ ॥ स्तम्भोच्छ्रायं प्रेतदाहं तृणकाष्ठादि संग्रहम् ॥ भवेत्पञ्च गुणं चात्र जातं लब्धं मृतं गतम् ॥
७६ ॥ अथ नक्षत्राणां मंधादि संज्ञा ॥ अंधकं मन्दनेत्रञ्च मध्यचक्षुः सुलोचनम् ॥ गणयेद्रोहि-
णी पूर्वं सप्तावृत्त्या पुनः पुनः ॥ ७७ ॥ अन्धर्क्षे शीघ्र लाभः स्यात्प्रयत्नतो मन्द लोचने ॥ अव-
णो मध्य नेत्रे तु नैव लाभः सुलोचने ॥ ७८ ॥ अन्धे प्राच्यां गतो वस्तु मन्द नेत्रे तु दक्षिणे ॥ प-
श्चिमे मध्य नेत्रे स्यादथोदीच्यां सुलोचने ॥ ७९ ॥ अथ दिवा रात्रौ पंच दश मुहूर्ताः ॥ शिवोहि-
र्मित्र पितरो वस्वंभो विश्व वेधसाः ॥ विधिरिन्द्रोथ शक्राग्निः रक्षोऽब्धीशोर्यमा भगाः ॥ ८० ॥ मुहूर्ते

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ९ | १७ | १० | २४ | २० | २१ | ४ | २२ | १८ | २६ | १९ | २५ | १२ | ११ | दिने मुहूर्त्ताः |
| ६ | २६ | २७ | २८ | १ | २ | ३ | ४ | ५ | ७ | ६ | २३ | २३ | २४ | २५ | रात्रौ मुहूर्त्ताः |

शा इति प्रोक्ता दिवा पंचदश क्रमात् ॥ रात्रौ मुहूर्त्ताः शिवज-पादहिर्बुध्न्य पूषकाः ॥ ८१ ॥ दास्त्रान्त्यं चादितिर्जीवो विष्णुर्वर्कौ तक्ष मारुतौ ॥ दिन मानस्य तिथ्यंशो रात्रेरपि मुहूर्त्तकः ॥ ८२ ॥ नास्त्र नाथ तुल्ये स्मिन् कार्य्यं कुर्यात्त्व मोदितम् ॥ दिन मध्ये ऽभिजित्संज्ञे दोष संघेषु सत्स्वपि ॥ ८३ ॥ सर्वं कुर्याच्छुभं कर्म याम्यादिग्ग मनं विना ॥ ८४ ॥ अथ रव्यादि वारेषु त्याज्य मुहूर्त्ताः ॥ अ-र्य्यमा भानु मद्वारे चन्द्रे ह्नि विधि राक्षसौ ॥ पित्र्याग्नी कुजवारे तु चन्द्र पुत्रे तथा ऽभिजित् ॥ ८५ ॥ पित्र्य ब्राह्म्यौ भृगोर्वारे रक्ष सर्पौ गुरोर्दिने ॥ रौद्र सार्पौ शनेरह्नि त्याज्याश्चैते मुहूर्त्तकाः ॥ ८६ ॥ इति श्री महैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्त्त गणपतौ नक्षत्र प्रकरणं समाप्तम् ॥ ४ ॥ ॥ अथ योग प्रकरणम् ॥ विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभना-भिधः ॥ अति गंडः सुकर्माख्यो धृतिः शूलाभिधानकः ॥ १ ॥ गंडो वृद्धिर्ध्रुव श्चाथ व्याघा-तो हर्षणाह्वयः ॥ वज्रं सिद्धिर्व्यतीपातो वरीयान्परिघः शिवः ॥ २ ॥ सिद्धः साध्यः शुभः शुक्लो 

ब्रह्म चैन्द्रोथ वैधृतिः ॥ योगानां ज्ञेयमेतेषां स्वनाम सदृशं फलम् ॥ ३ ॥ अथ विरुद्ध योगानां
त्याज्यांशाः ॥ वैधृतिव्यतिपाताख्यौ सम्पूर्णौ वर्जयेच्छुभे ॥ वज्रविष्कंभयोश्चैव घटिकात्रय-
मादिकम् ॥ ४ ॥ परिघार्द्धं पञ्च शूले व्याघाते घटिका नव ॥ गंडातिगंडयोः षट्च हेयाः सर्व-
शुकर्मसु ॥ ५ ॥ एतेषामपि योगानां शेषं साधारणं स्मृतम् ॥ एके विरुद्ध योगानां पादमाद्यं त्य-
जंतिहि ॥ ६ ॥ इति श्री मद्दैवज्ञ रावल हरिशंकर सूरिसूनु गणपति कृते मुहूर्त्त गणपतौ यो-
ग प्रकरणं समाप्तम् ॥ ५ ॥ ॥ अथ करण प्रकरणम् ॥ करणानि च साख्यानि बवबालवकौ-
लवम् ॥ तैतिलं गरवाणिज्ये विष्टिरेतानि सप्त च १ गताश्च तिथयो द्वाभ्यां २ निघ्नाः शुक्लादितः
क्रमात् ॥ बवाद्य करणं पूर्वं ज्ञेयं सैकं परेदले ॥ २ ॥ परे कृष्णा चतुर्दश्यां दले च शकुनिर्भवेत् ॥
दर्शे चतुष्पदं नागं पूर्वापर विभागयोः ॥ ३ ॥ शुक्ले प्रतिपदः पूर्वदले किंस्तुघ्न संज्ञकम् ॥ एतेषां करणा-
नां हि चतुष्कं स्थिर संज्ञकम् ॥ ४ ॥ अथ करणानां स्वामिनः ॥ इन्द्रो ब्रह्मा तथा मित्र श्चार्यमा भू-
मायमाः ॥ कलुक्षाख्यो नाग वायू करणा नामधीश्वराः ॥ ५ ॥ बवे पौष्टिक कार्याणि विष्क २२
र्माणि बालवे ॥ कौलवे स्त्री सुहृत्कर्म तैतिले सुभगा प्रियम् ॥ ६ ॥ गरे बीजाश्रितं कुर्याद्वाणिज्यं

वाणिज्ये चरेत् ॥ दाहयात्रादिकं विष्ट्यां न शुभं तत्र किंचन ॥ ७ ॥ शकुनावौषधं मन्त्र साधनं पौष्टि-
कं चरेत् ॥ राज्यं गो विप्रयोः कर्म पितृ कार्य्यं चतुष्पदे ॥ ८ ॥ सौभाग्यं दारुणं नागे किंस्तुघ्ने मंगलं
चरेत् ॥ ९ ॥ अथ भद्रायां विशेषः ॥ एकादश्यां चतुर्थ्यां च शुक्ले भद्रा परे दले ॥ अष्टम्यां पौर्णिमायां च
भद्रा पूर्व दले स्मृता ॥ १० ॥ तृतीयायां दशम्यां च कृष्णो पक्षे परे दले ॥ सप्तम्यां च चतुर्दश्यां भद्रा पूर्व
दले भवेत् ॥ ११ ॥ अथ भद्राया अंग विभागस्तत्फलम् ॥ पंचनाड्यो मुखे चैका कंठे तु हृदये दश ॥ पंच
नाभौ कटौ षट् च विष्टेः पुच्छ घटित्रयम् ॥ १२ ॥ कार्यनाशो मृतिर्लक्ष्म्या नाशो बुद्धेर्धृतिः कलिः ॥ जयः
क्रमात्फलं विष्टेरिदमंग समुद्भवम् ॥ १३ ॥ कार्येत्यावश्यके विष्टेर्मुखमात्रं परित्यजेत् ॥ अथ भद्राया
दिङ्मुखं च ॥ शक्राष्ट मुनि तिथ्यब्धि दिगिंद्राग्नि मिते तिथौ ॥ प्रथमादिषु यामेषु दिक्षु पूर्वादितः क्रमा-
त् ॥ १४ ॥ विष्टेर्मुखं विजानीयाच्छुभं पृष्ठेऽग्रतोऽशुभम् ॥ १५ ॥ अथ भद्रा पुच्छम् ॥ प्रथमे चाष्ट-
मे ष्टम्याः प्रथमे चाष्टमेऽहनि ॥ एकादश्यास्तथा षष्ठे पौर्णिमास्यास्तृतीयके ॥ १६ ॥ प्रान्त्यं घटि-
२२ त्रयं पुच्छं कृष्णा पक्षे त्वथोच्यते ॥ सप्तमे स्यात्तृतीयायाः सप्तम्यास्तु द्वितीयके ॥ १७ ॥ दशम्याः पंचमे २२
यामे चतुर्दश्याश्चतुर्थके ॥ विष्टिपुच्छे जयो युद्धे कार्यमन्यन्न शोभनम् ॥ १८ ॥ अथ भद्रा स्वरूपम् ॥

पुरादेवासुरे युद्धे शम्भुकायाद्विनिर्गता ॥ दैत्यघ्नी रासभस्था च विष्टिर्लांगूलिनी त्रिपात् ॥ १९ ॥ सिं-
हग्रीवा शववारूढा सप्तहस्ता कृशोदरी ॥ अमरैः प्रवरा प्रांते सा नियुक्ता शिवाज्ञया ॥ २० ॥ महो-
ग्रा विकरालास्या पृथुदंष्ट्रा भयानका ॥ कार्यघ्नी भुवमायाति वह्निज्वाला समाकुला ॥ २१ ॥ अथ
भद्राया दोषापवादमाह ॥ तिथेः पूर्वार्द्धजा रात्रौ दिने भद्रा परार्द्धजा ॥ भद्रादोषो न तत्र स्यात्कार्ये-
त्यावश्यके सति ॥ २२ ॥ अजत्रयेऽलिगे च भद्रा स्वर्लोकचारिणी ॥ कन्याद्वये धनुर्युग्मे चन्द्रे भद्रा
रसातले ॥ २३ ॥ कुम्भे मीने तथा कर्के सिंहे चन्द्रे भुविस्थिता ॥ भूर्लोकस्था सदा त्याज्या स्वर्गपाता-
लगा शुभा ॥ २४ ॥ वैधृतिर्व्यतिपातश्च विष्टिश्च भौमवासरः ॥ तथैव दुष्टताराः स्युर्मध्याह्नात्परतः
शुभाः ॥ २५ ॥ अथ भद्राविशेषे कस्यचिन्मते विशेषः ॥ शुक्लेतु वृश्चिकी भद्रा कृष्णा पक्षे भुजंगमा
सा दिवा सर्पिणी रात्रौ वृश्चिकी चापरे जगुः ॥ २६ ॥ मुखं त्याज्यं तु सर्पिण्या वृश्चिक्याः पुच्छमे-
व च ॥ स्वरार्चा प्रसवे दुर्गापूजने दानकर्मणि ॥ दाहघातादिके भद्रा शस्ता नान्यत्र शोभना ॥ २७ ॥
इति करण प्रकरणं समाप्तम् ॥ ६ ॥ अथ चन्द्रताराबल प्रकरणम् ॥ सपादर्क्षद्वयं भोगो मेषा- 
दीनामनुक्रमात् ॥ १ ॥ अथ नक्षत्राणां प्रत्येकं राशेर्भोगः ॥ अश्विनी भरणी सर्वा कृत्तिका प्रथमां-

घ्रिकम् ॥ मेषः स्यात्कृत्तिकापादत्रितयं रोहिणी तथा ॥ २ ॥ वृषभो मृग पूर्वार्द्धं तदंत्यार्द्धं तथार्द्रभं ॥
पादत्रयं पुनर्वस्वोः सराशिर्मिथुनाभिधः ॥ ३ ॥ तदंत्योंघ्रिस्तथा पुष्योह्याश्लेषा कर्कटाभिधः ॥ मघा
पूर्वोत्तराद्योंघ्रिः सिंहस्तच्चरणात्रयम् ॥ ४ ॥ हस्तश्चित्राभ पूर्वार्द्धं कन्याश्चित्रोत्तरं दलम् ॥ स्वातिभं च
विशाखाद्य चरणात्रितयं तुला ॥ ५ ॥ तदंत्याघ्र्यनुराधाख्ये ज्येष्ठाभं वृश्चिकः स्मृतः ॥ मूलं पूर्वोत्तराषा-
ढा श्चाद्यांघ्रिकथितं धनुः ॥ ६ ॥ उत्तरांघ्रि त्रयं कर्णो धनिष्ठांत्यं दलं दलम् ॥ मकराख्यो धनिष्ठांत्यं दलं च
शततारका ॥ ७ ॥ पूर्भापाद त्रयं कुम्भस्तदंत्य चरणास्तथा ॥ उभा च रेवती चैव मीनराशिः प्रकीर्तिता
॥ ८ ॥ अथावकहडादिचक्रानुसारेण नक्षत्र चरणानां वर्णाः ॥ अश्विनी चु चे चो ला ली लू ले लो भ-
रण्यपि ॥ कृत्तिकास्यादई उ ए रोहिण्यो वा वि वु स्मृताः ॥ ९ ॥ वे वो का की मृगश्चार्द्रा कु घ ङ छाः
प्रकीर्तिताः ॥ के को हा ही पुनर्वस्यात् हू हे हो डा च पुष्यभम् ॥ १० ॥ आश्लेषा तु डि डू डे डो मा मि मू
मे मघाह्वयम् ॥ मो टा टी टू तु पूर्वाख्या टे टो प पि च उत्तरा ॥ ११ ॥ प्रोक्तः पूषणा ठा हस्तः पे पो रा री
॥ तु चित्रका ॥ रू रे रो ता तथा स्वाती ती तू ते तो विशाखिका ॥ १२ ॥ अनुराधा ना नि नू ने ज्येष्ठा नो- २५
या यि यू मता ॥ तथा ये यो भ भी मूलं पूर्वाषाढा भु धा फ ढा ॥ १३ ॥ भे भो जा ज्युत्तराषाढा-

त्तु जे जो खस्तथा भिजित् ॥ खी खु खे खो अवोज्ञेयो गा गि गू गे धनिष्ठिका ॥ १४ ॥ गो सा सी सु
शतताख्यं तु पूभा से सो ददी मता ॥ उभा दूथ झञः ज्ञेया दे दो चा ची तु रेवती ॥ १५ ॥ अथ चन्द्रस्य
शुभाशुभ फलम् ॥ स्वजन्म राशि मारभ्य चन्द्रराशि स्थितं फलम् ॥ चन्द्रे जन्मस्थिते पुष्टिर्द्वितीये चं
सुखं भवेत् ॥ १६ ॥ तृतीये धन लाभश्च चतुर्थे रोग संभवः ॥ पंचमे कार्य सिद्धिश्च षष्ठे द्रव्या गमो महा-
न् ॥ १७ ॥ सप्तमे भूप सन्मानस्त्वष्टमे मरणं ध्रुवम् ॥ नवमे च भयं ज्ञेयं दशमे कार्य संपदम् ॥ १८ ॥ एका
दशोऽर्थ लाभश्च द्वादशो विविधापदः ॥ १९ ॥ अथ शुक्ल पक्षे विशेषः ॥ द्वितीयः पंचमश्चन्द्रो नवमश्च
शुभप्रदः ॥ शुक्ल पक्षे विशेषोयं तुल्य मन्यत्तयो भयोः ॥ २० ॥ चन्द्रस्यैव बले शुक्ले न तु तारा प्रधान-
ता ॥ रात्रौ कान्ते बलोपेते स्वातंत्र्यं न चयोषितः ॥ २१ ॥ कृष्ण पक्षे तु ताराया बलं ग्राह्यं सदायतः ॥
स्त्रीरागे वा प्रोषिते कान्ते गार्हस्थ्यं गेहिनी चरेत् ॥ २२ ॥ अथावश्यकृत्ये पक्ष चन्द्रबलम् ॥ शुभः
पक्षस्तु दुष्टेऽब्जे पक्षादौ कृष्ण पक्षके ॥ शुक्ले तु शुभदे चन्द्रे शुभः पक्षोऽति संकटे ॥ २३ ॥ अथ
तारा बलम् ॥ जन्म भाद्दिन भं यावत्तारा ज्ञेया नवो द्धृता ॥ जन्म संपद्विपत्क्षेम पापः सिद्धो बधः क्र-
मात् ॥ २४ ॥ मित्राति मित्र संज्ञा च नाम तुल्य फलाश्च ताः ॥ द्विचतुः षस्त्र वाष्टस्य २।४।६।८

।८ स्ताराश्चैवोत्तमामता: ॥ २५ ॥ जन्माख्या मध्यमा ज्ञेया नष्टास्त्वन्याः ३।५।७ प्रकीर्तिताः॥
२६ ॥ अत्यावश्यके ह्यत्येदुष्टताराणांत्याज्यांशाः ॥ तारा पूर्णांत्यजेदाद्यांवर्षे पञ्च त्रिसप्तकाः
५।३।७। । द्वितीयंचैव तत्यादां स्तुर्यादिस तृतीयकान् ॥ तृतीयेतु शुभाः सर्वाः कार्य्येत्याव
श्यके स्मृताः ॥ २७ ॥ अथ दुष्टतारासु दानम् ॥ सप्तम्यां तारकायाञ्च दद्यात्स्वर्णं तिलानपि ॥
गुडं तृतीय तारायां पञ्चम्यां लवणं तथा ॥ दोषापनुत्तये तासां दद्याच्छाकं त्रिजन्मसु ॥ २८ ॥
अथ चन्द्रावस्था ॥ प्रवासोथ विनाशश्च मरणं जयहास्यके ॥ रतिः क्रीडा तथा सुप्ता भुक्ता चाथ
जराभिधा ॥ २९ ॥ कम्पिता सुस्थिरावस्था द्वादशैताविधोः स्मृता ः॥ तासामानमपादैकादश
नाडीमितं स्मृतम् ॥ ३० ॥ मेषादितः प्रवासाद्या नाम तुल्य फलप्रदाः ॥ ३१ ॥ अथतासां क्र
मस्योदाहरणम् ॥ मेषराशौ प्रवासाद्या नाशाद्या वृषभे विधौ ॥ मृताद्या मिथुनेचैवं क्रमाद्द्वादशराशि
षु ॥ ३२ ॥ अथ कार्यविशेषे ग्रहबलं सर्व चन्द्रबलंच ॥ उद्वाहे चोत्सवेजीवः सूर्यो भूपालदर्शने ॥ संग्रहे
धरणीपुत्रो विद्याभ्यासे बुधो बली ॥ ३३ ॥ यात्रायां भार्गवः प्रोक्तो दीक्षायांच शनैश्चरः ॥ चन्द्रमाः २६
सर्वकार्येषु प्रशस्तो गृह्यते बुधैः ॥ ३४ ॥ अथ चन्द्रबले कश्चन विशेषः ॥ शुक्लश्चन्द्रो व्यमत्यापात्सम

पापयुक्तथा ॥ पापमध्यगतः क्षीणो नीचगः शत्रुवर्गगः ॥ ३५ ॥ अशुभोपि शुभश्चन्द्रो गुरुणालो-
कितो युतः ॥ स्वर्क्षोच्चस्थः शुभांशे वा स्वाधिमित्रांशके तथा ॥ ३६ ॥ अथावश्यके कृत्ये दुष्टतिथि-
वारर्क्षचन्द्रतारादीनां दानम् ॥ तंदुलांश्च तिथौ दुष्टे वारे रत्नं सकांचनम् ॥ गां नक्षे कनकं योगे करणे
धान्यमेवच ॥ ३७ ॥ शंखं रौप्ययुतं चन्द्रे तारायां सैंधवं तथा ॥ नाड्यां हेम नृपो दद्यात्कार्ये त्वावश्य-
के सति ॥ ३८ ॥ इति श्री महैवज्ञ रावल हरिशंकर सं० चन्द्रताराबल प्रकरणं समाप्तम् ॥ ७ ॥ ॥ अथ
शुभाशुभप्रकरणम् ॥ तत्र तिथिवारोत्थशुभयोगाः ॥ नन्दा भृगौ बुधे भद्रा मन्दे रिक्ता कुजे जया ॥ गुरौ
पूर्णाः खिले कार्यसिद्धियोगाः शुभावहाः ॥ १ ॥ नन्दा भद्रा तथा नन्दा जया रिक्ता थ भद्रिका ॥ पू-
र्णा सूर्य्यादिवारेषु वशिष्ठादिमताच्छुभाः ॥ २ ॥ अथ नक्षत्रवारोत्थयोगाः ॥ तत्रादावमृतसिद्धि
योगाः ॥ अर्के हस्तो मृगश्चन्द्रे गुरौ पुष्योऽश्विनी कुजे ॥ अनुराधा बुधे शुक्रे रेवती रोहिणी शनौ ॥
३ ॥ अमृतः सिद्धियोगः स्यात्सर्वकार्यार्थसिद्धिदः ॥ यथा सूर्य्यस्तमो हंति दोषसंघांस्तथा त्वयम्
॥ ४ ॥ अत्र कुत्रचिदमृतसिद्धियोगस्यापि त्याज्यत्वम् ॥ पञ्चम्यादितिथौ त्याज्या हस्तार्काद्याः २७
क्रमाच्छुभे ॥ योगाश्चामृतसिद्धाख्यो अन्ये सर्वार्थसाधकाः ॥ ५ ॥ उद्वाहे गुरुपुष्यश्च प्रवेशे

तुकुजाश्विनी ॥ त्यजेदेतत्प्रयत्नेन प्रयाणे शनिरोहिणीम् ॥ ६ ॥ अथ दोष संघहरो रवियोगः
॥ सूर्य्य भाद्दश मे षष्ठे तुर्ये विंशेत्रयोदशे ॥ नवमे चन्द्रनक्षत्रे रवियोगः शुभ प्रदः ॥ ७ ॥ अनेक-
दोष संघानां ध्वंसकोऽय मुदाहृतः ॥ ८ ॥ अथ नन्दादियोगाः॥ आनन्दः कालदंडोथ धूम्राक्षो-
थ प्रजापतिः ॥ सौम्य ध्वांक्ष ध्वजाश्चैव श्रीवत्सोवज्र मुद्गरौ ॥ ९ ॥ छत्रं मित्रं क्रमेरौव मानसः ।
पद्मलुंबकौ॥उत्पात मृत्युकाणाख्या सिद्धिश्चैव शुभामृतो ॥ १० ॥ मुसलं च गदाख्यश्च मातं-
गोराक्ष सचरः॥स्थिरः प्रवर्ध मानश्च नाम तुल्य फला अमी ॥ ११ ॥ भानुवारेश्वि नक्षत्रात्साभि-
जित्कैश्च सर्वभैः ॥ भवंति क्रम शोयोगा अष्टा विंशति संख्यकाः ॥ १२ ॥ मृगादारस्य रवौ श्लेषांतं
कुजवासरे ॥ हस्तोबुधेनुराधायां गुरुवारेतथैवच ॥ १३ ॥ उत्तराषाढतः शुक्रेशततारादितः
शनौ ॥ १४ ॥ अथोत्पातादि योग चतुष्कस्यैव ज्ञानम् ॥ क्रमाच्चतुष्टये भानां विशाखातोरवेर्दिने
पूर्वाषाढा भिधाचन्द्रे धनिष्ठातः कुजेहनि ॥ १५ ॥ रेवत्याश्च बुधेज्ञेया रोहिणी तो बृहस्पतौ ॥
पुष्याच्छुक्रेतथा मन्दे उफातश्च भवंत्यमी ॥ १६ ॥ योगाश्चत्वार उत्पात मृत्यु काणाख्य सिद्धयः १७ 
अथ दुर्योगानांत्याज्य घटिकाः ॥ ध्वांक्ष मुद्गर वज्राणां घटी पंचक्रमादिषु ॥ काणामौसलयोर्द्वेद्वेचतस्रः

पद्मलुंबयोः ॥ २८ ॥ एकाधूम्रे गदे सप्त चरेतिस्रो घटीस्त्यजेत् ॥ त्यजेत्सर्वान् शुभे मृत्यु कालोत्या-
ताख्य राक्षसान् ॥ २९ ॥ अथ वारनक्षत्रोद्भवः सिद्धियोगः ॥ मूलेह्यर्के श्रवश्चन्द्रे भौमे चोत्तर भाद्र-
पात् ॥ कृत्तिका बुधवारे तु गुरुवारे पुनर्वसुः ॥ पूफा शुक्रे शनौ स्वाती सिद्धि योग उदाहृतः ॥ २०॥
अथ तिथि वारोत्था दुष्टयोगाः ॥ द्वादश्यर्के विधौ षष्ठी भौमे सप्ताष्टमी बुधे ॥ दश शुक्रे शनौ रुद्राः
गुरौ नव हुताशनः ॥ २१ ॥ द्वादश्यर्के विधौ रुद्रा भौमे पंच बुधेऽग्नयः ॥ गुरौ षष्ठ्यष्टमी शुक्रे दग्धा-
ख्यो नवमी शनौ ॥ २२ ॥ चतुर्थ्यर्के विधौ षष्ठी द्वितीया ज्ञेऽष्टमी गुरौ ॥ नव शुक्रे विषाख्या च स-
प्तमी कुज मन्दयोः ॥ २३ ॥शनौ षष्ठी भृगौ सप्ताष्टमी जीवे बुधे नव ॥ कुजे दश विधौ रुद्राः ककचो
द्वादशी रवौ ॥ २४ ॥ प्रतिपद्ज्ञे रवौ सप्त संवर्तो योग ईरितः ॥ दग्धादीस्तिथिवारोत्थाँस्त्यजेद्यो-
गान् शुभे सदा ॥ २५ ॥ अथ तिथि नक्षत्रोत्पन्नः सार्पयोगः ॥ द्वितीया मनुराधायां मघायां पञ्च-
मीतिथिम् ॥ एकादशीं च रोहिण्यां तृतीयां त्र्युत्तरे त्यजेत् ॥ २६ ॥ नवमीं कृत्तिकायां च स्वाती
चित्रे त्रयोदशीम् ॥ त्यजेत्षष्ठीं च रोहिण्यां पूर्वाभाद्रपदेऽष्टमीम् ॥ २७ ॥ अथ नक्षत्र वारोत्था दुष्टयो- २९
गाः ॥ तत्रादौ यम घंटयोगः ॥ अर्के मघा विशाखेन्दौ ज्ञे मूलं कृत्तिका गुरौ ॥ आर्द्रा भौमे शनौ हस्तो

रोहिणी भृगुवासरे ॥ २८ ॥ यम घंटाख्ययोगोऽयं सर्वकार्य्य विनाशकः ॥ २९ ॥ अथ मृत्युयो-
गः ॥ अनुराधा रवौ सोमे उत्तराषाढ संज्ञकाः ॥ बुधेश्विनी मृगो जीवे शुक्रे श्लेषा शनौ करः ॥ भौ-
मे शतभिषक् चायं मृत्यु योगोर्थ नाशकः ॥ ३० ॥ अथ दग्ध योगः ॥ भरण्यर्के विधौ चित्रा जीवे
चोत्तर फाल्गुनी ॥ भौमे चैवोत्तराषाढा धनिष्ठा बुधवासरे ॥ ३१ ॥ शुक्रे ज्येष्ठांत्य भं मन्दे त्यजेदेत-
द्धि दग्ध भम् ॥ ३२ ॥ अथ शुभे त्याज्यं त्रिविधं गंडांतम् ॥ नक्षत्र तिथि राशीनां गंडांतं त्रिविधं त्यजे-
त् ॥ नव पंच चतुर्थ्यांत्ये द्व्येकार्ध घटिका २ । १ । ३० मितम् ॥ तावन्मितं ततोग्रारात्मादावपि व-
रित्यजेत् ॥ ३३ ॥ तदेव दर्शयति ॥ ज्येष्ठा मूलर्क्षयोः संधौ रेवत्यश्वि भयोस्तथा ॥ आश्लेषा मघयो-
रंतराले नाडी चतुष्टयम् ॥ ३४ ॥ अन्तरे पञ्चमी षष्ठ्योः पूर्णिमाद्याह्वयोरपि ॥ दशम्येका-
दशी संधौ गंडांतं घटिकाद्वयम् ॥ ३५ ॥ कर्क सिंहाख्य योर्मीन मेषयो रंतरे तयोः ॥ वृश्चिका-
ख्य धनुस्संधौ लग्न स्यैकं घटी मितम् ॥ ३६ ॥ अथार्धयामाः ॥ अर्धयामाः परित्याज्या वेद-
सप्त द्वि पञ्चमाः ॥ अष्ट त्रि षष्ठ संख्याकाः क्रमतो रवि वासरात् ४ । ७ । २ । ५ । ८ । ३ । ६ 
॥ ३७ ॥ अथ कुलिक कंटक काल वेला यम घंटाख्यास्त्याज्य मुहूर्ताः ॥ मन्वर्क दशाना-

दिनकुलिकादिचक्रम्

| वार | र॰ | चं॰ | मं॰ | बु॰ | बृ॰ | शु॰ | श॰ |
|---|---|---|---|---|---|---|---|
| कुलि॰ | १४ | १२ | १० | ८ | ६ | ४ | २ |
| कंट॰ | ६ | ४ | २ | १४ | १२ | १० | ८ |
| काल॰ | ८ | ६ | ४ | २ | १४ | १२ | १० |
| यमघं॰ | १० | ८ | ६ | ४ | २ | १४ | १२ |

रात्रौकुलिकादिचक्रम्

| वार | र॰ | चं॰ | मं॰ | बु॰ | बृ॰ | शु॰ | श॰ |
|---|---|---|---|---|---|---|---|
| कुलि॰ | [illegible] | ११ | ९ | ७ | ५ | ३ | १ |
| कंट॰ | ५ | ३ | १ | १३ | ११ | ९ | ७ |
| काल॰ | ७ | ५ | ३ | १ | १३ | ११ | ९ |
| यमघं॰ | ९ | ७ | ५ | ३ | १ | १३ | ११ |

गर्तुवेद नेत्रसिताः १४।१२ १०।८ ६।४।

२क्षणाः॥ कुलिकास्तेरवेर्वाराःक्रमतःकंटकाबुधात॥ ३८॥ गुरोस्तेकालवेलाख्याः शुक्रास्तु
यमघंटकाः॥ त्यजेदेतान् शुभेकार्य्येनिशिह्येकान्मुहूर्त्तकान्॥ ३९॥ अथ दुष्ट क्षणाः॥ क्षणाश्च
तुर्दशः सूर्ये नवमद्वादशौ ९।१२ विधौ॥ सप्तमी निशि भौमे ह्नि तुर्य ४ श्चाथ बुधेष्टमः॥ ४०॥ षष्ठ
द्वादशकौजीवेचतुर्थनवमौ ४।९। भृगौ॥ शनौचाद्य द्वितीयौ। १। २। च त्याज्या दुष्टक्षणा इमे॥ 
४१॥ अथैतेषामेव सुबोधार्थं पुनर रव्यादिषु त्याज्य क्षणा लिख्यंते॥ रवौ षट् दश सप्ताष्ट मनु संख्या

मुहूर्त्तकाः ६।१०।७।८।१४ ॥ चन्द्रेऽब्धिवसुषड्विश्वेमनुखेटार्कसंमिताः ४।८।६।१३।१४।९।
१२॥ ४२॥ भौमेद्वित्रिचतुःषष्ठदशसंख्याः क्षणाः २।३।४।६।१० स्मृताः॥ बुधेवेदाश्विवस्वंक-
मनुदिक्प्रमिताः ४।२।८।९।१४।१० क्षणाः ॥ ४३॥ जीवे भूयाश्वितिथ्यंगमनुसूर्य्यमिता १६।२।
१५।६।१४।१२ च्युते ॥ शुक्रे पंचांकषड्वेददिगर्कमनु ५।९।६।४।१०।१२।१४।संमिताः ॥ ४४॥
मन्दे भूनेत्ररुद्राष्ट।१।२।११।८।षोडशांशाः क्षणा इमे ॥ ४५ ॥ अथ यमघंटकुलिकक्षणयोर्दे-
शविशेषेत्याज्यत्वम् ॥ विंध्येहिमालयोर्मध्येमगधेयमघंटकः ॥ अंगेऽन्ध्रे मत्स्यदेशे वा दोष क्वान्त-
तरत्रसः ॥ ४६ ॥ काश्मीरे कुलिकस्त्याज्यस्त्वर्धयामस्तुसर्वतः ॥ ४७ ॥ अथ संक्रान्तौ त्याज्य-
कालः ॥ अयने विषुवेत्याज्यं पूर्वमध्यं परंदिनम्॥ शेषं संक्रमणे २।५।८।११।३।६।९।१२। पूर्वं
पश्चात्षोडशनाडिकाः ॥ ४८ ॥ अथ तिथिक्षयवृद्धिदोषः ॥ तिथीनां त्रितयं वारे एकं स्पृशति यत्र
वै ॥ अवमं तद्दिनं ज्ञेयं शुभकर्मसु संत्यजेत् ॥ ४९ ॥ वाराणां त्रितयं यत्र तिथिरेका स्पृशेद्यदा
विष्णुत्स्पृक् चेति सा ख्याता न ग्राह्या मंगलादिषु ॥ ५० ॥ अथ मास शून्यानि तिथि नक्षत्र ल- ३२
ग्नानि ॥ अत्र दर्शान्ता मासा ग्राह्याः ॥ चैत्राष्टमी नवम्यौ च ८।९ ॥ वैशाखे द्वादशी तिथिः १२

मु॰ग॰ श्रावणोद्वितृतीये च २।३। भाद्रे भूनेत्र संमिते १।२ ॥ ५१॥ दशम्येकादशीत्वीषे।१०।११।सप्तम्य-
३३ ष्टौच मार्गके ७।८ चतुर्थी पंचमी ४।५। पौषे शून्यास्तापक्षयोर्द्वयोः ॥ ५२॥ कार्तिके पंचमी कृष्णा
५ तथा शुक्ला चतुर्दशी १४ ॥ आषाढे बहुलाषष्ठीर्शुक्लापक्षेतु सप्तमी ७ ॥ ५३ ॥ चतुर्थी फाल्गु-
नी कृष्णा ४ शुक्लपक्षे तृतीयका ३ ॥ ज्येष्ठे चतुर्दशी कृष्णा १४ शुक्ले चैव त्रयोदशी १३ ॥ ५४॥ कृ-
ष्णा तु पञ्चमी ५ माघे षष्ठी ६ शुक्ले प्रकीर्तिता ॥ ५५ ॥ इति सामान्य शून्य तिथयः ॥ अथमा-
स शून्य नक्षत्राणि ॥ अश्विनी रोहिणी चैत्रे चित्रास्वाती च माधवे ॥ ज्येष्ठे पुष्योत्तराषाढे धनि-
ष्ठाका मिथेशुचौ ॥ ५६ ॥ श्रावणे श्रवणो याख्ये पूर्वाभाद्र पदाश्विने ॥ रेवती शतभे भाद्रे का-
र्तिके कृत्तिका मघा ॥ ५७॥ मार्गे चित्रा विशाखा च पौषेत्वार्द्राश्विनीकराः॥ फाल्गुने भरणी।
ज्येष्ठा माघे मूलं श्रवस्तथा ॥ एतानि मास शून्यानि भानि प्रोक्तानि कोविदैः ॥ ५८ ॥ अथ मास-
शून्य राशयः ॥ कुम्भो मीनो वृषश्चैव मिथुनं मेष कन्यके ॥ वृश्चिकोथ तुलाधन्वी कर्को मकर-
सिंहकौ ॥ ५९ ॥ चैत्रादिषु क्रमादेते कथिताः शून्य राशयः ॥ ६० ॥ अथौज तिथिषु शून्य- 
लग्नानि ॥ आद्ये तिथौ १ तुलानक्रौ तृतीये मृगसिंहकौ॥ पञ्चम्यां मिथुनं कन्या सप्तम्यां ७

मु॰ ग॰ ३४

कर्कटो धनुः ॥ ६१ ॥ मकरदश्यां धनुर्मीनो नवम्यां ऽ सिंहकर्कटौ ॥ वृषो मीन स्त्रयोदश्यां शून्य-
लग्नमिदं त्यजेत् ॥ ६२ ॥ अथ शून्य तिथ्यादीनां देश विशेषे त्याज्यत्वमाह ॥ नक्षत्र तिथि ल-
ग्नानि मास शून्यानि यानि च ॥ मध्य देशे त्यजेत्तानि शुभे नान्यत्र कुत्रचित् ॥ ६३ ॥ अथाव-
श्यके योगानामपवादाः ॥ तिथिवारोद्भवान्योगान् दुष्टाख्यांश्च भवारजान् ॥ तिथि भोत्थांश्चि-
तयजान् हूणे वंगे खशे त्यजेत् ॥ ६४ ॥ नान्य देशे निषिद्धास्ते गुरावत्तिथि भादिषु ॥ उत्पात-
मृत्यु काणाख्या ज्वलो दग्धाख्य कालकान् ॥ ६५ ॥ क्रकचं यमघंटादीन् शस्ते चन्द्रे शुभान्
जगुः ॥ मध्याह्नोत्तर मित्येके यामोत्तर मथापरे ॥ ६६ ॥ यात्रातिरिक्त कार्येऽन्ये लग्न शुद्ध्या
शुभान् जगुः ॥ कुयोगाः सिद्धि योगाश्च यदि स्याता शुभावपि ॥ ६७ ॥ सुयोगो हन्ति दुर्योगं ऽ
कार्यसिद्ध्यै शुभावहः ॥ ६८ ॥ अथ शुभाशुभ कार्ये त्रिपुष्कर यमल योगौ ॥ भद्रा तिथौ ऽ
शनीज्यारवारे चेद्विषमांघ्रिभम् ॥ नन्दा त्रिपुष्करो योगो यमलो युग्म पादभे ॥ ६९ ॥ अथ सु- ३४
बोधार्थं रव्यादिवारेषु शुभाशुभ योगाः ॥ रवौ हस्तोऽश्विनी मूलं धनिष्ठा चोत्तरा त्रयम् ॥ पु-
ष्यस्तथाष्टमी चैव सिद्धि योगा इमे स्मृताः ॥ ७० ॥ विशाखा भरणी सूर्ये मघा ज्येष्ठानुरा-

खिका ॥ सप्तमी द्वादशी तद्वद्विरुद्धास्याच्चतुर्दशी ॥ ७१ ॥ चन्द्रे च श्रवणः पुष्यो ऽनुराधा रो-
हिणी मृगः ॥ दशमी नवमी वाथ सिद्धियोगः शुभावहः ॥ ७२ ॥ पूर्वाषाढोत्तराषाढा स्वाती चि-
त्रे विशाखिका ॥ सोमे चैकादशी षष्ठी वर्जनीया त्रयोदशी ॥ ७३ ॥ भौमे ऽश्लेषाश्विनी मूलं
मृगशीर्षं त्रयोदशी ॥ तृतीया चाष्टमी षष्ठी सिद्धिदा कीर्तिता बुधैः ॥ ७४ ॥ उत्तराषाढभं चा-
र्द्रं धनिष्ठात्रितयं तथा ॥ द्वितीया दशमी भौमे वर्जनीया प्रयत्नतः ॥ ७५ ॥ बुधे पुष्यो ऽनुराधा
च कृत्तिका रोहिणी मृगः ॥ द्वितीया सप्तमी चैव द्वादशी च शुभप्रदा ॥ ७६ ॥ धनिष्ठा भरणी मूल-
मश्विनी रेवती बुधे ॥ तृतीया प्रतिपच्चापि विरुद्धा नवमी स्मृता ॥ ७७ ॥ गुरौ पुष्योऽनुराधा च
विशाखाश्विपुनर्वसुः ॥ रेवती दशमी चैव पूर्णिमा शुभदा स्मृता ॥ ७८ ॥ जीवे षष्ठ्यष्टमी
नेष्टा चतुर्थी शततारका ॥ कृत्तिकादि चतुष्कं च तथा चोत्तर फाल्गुनी ॥ ७९ ॥ शुक्रे पूषा-
श्विनी चित्रा रेवती च पुनर्वसुः ॥ श्रवणः प्रतिपत्षष्ठी सिद्धा चैकादशी तथा ॥ ८० ॥ भार्गवे
रोहिणी ज्येष्ठा पुष्याश्लेषा मघा तथा ॥ द्वितीया सप्तमी चैव विरुद्धा सर्वकर्मसु ॥ ८१ ॥ शनौ स्वाती 
श्रवः पूर्वाफाल्गुनी रोहिणी मृगः ॥ चतुर्थी नवमी वापि तिथिः सिद्धा चतुर्दशी ॥ ८२ ॥ पूर्वा-

षाढोत्तराषाढा चित्रा हस्तोथ रेवती ॥ उत्तरा फाल्गुनी षष्ठी निषिद्धा सप्तमी शनौ ॥ ८३ ॥ इति
श्री मद्दैवज्ञ रावल हरिशंकर सूरि सूनु॰ शुभाशुभ प्रकरणं समाप्तम् ॥ ८ ॥ अथ त्याज्यप्रकरणं॥
तिथि नक्षत्र वाराणां दुष्ट योगान् परस्परम् ॥ व्यतीपातादि दुर्योगान् विष्टि दर्शार्क संक्रमान्॥
१ ॥ जन्मर्क्ष तिथि मासांश्च तिथ्यर्द्धं लव सन्धिनम् ॥ पापैर्मुक्तं युतं भोग्यं विद्धं लत्तित मुक्तकम् २
उत्पात ग्रह भिन्नं च खग्रासे ग्रहणार्क्षकम् ॥ षण्मासावधि मासेषु त्रिषु ग्रासेऽर्द्धकेऽसति ॥ ३ ॥
मास मेकं तु तुर्यांशे ग्रस्ते चन्द्रे च भास्करे ॥ त्र्यहं प्राग्ग्रहणात्सप्त दिनानि ग्रहणोत्तरम् ॥ ४ ॥
ग्रस्तास्ते तु त्र्यहं ग्रस्तो त्र्यहं ग्रस्तोदये परम् ॥ पूर्णोग्रासेत्विदं ज्ञेयं खण्डे ग्रासेनुपाततः ॥ ५ ॥
गण्डांतं त्रिविधं दुष्टं क्षीणेन्दुं पाप कर्तरीम्॥पाप होरा खले वारे यामार्धं कुलिकादिकान्॥ ६॥
चन्द्र पाप युतं लग्न मंशं वा कुनवांशकम् ॥ जन्मराशि विलग्नाभ्या मष्टमं लग्न मेव च॥ ७ ॥
दिन मेकं तु मासान्ते नक्षत्रान्ते घटीद्वयम् ॥ घटीमेकां तु तिथ्यन्ते लग्नान्ते घटिकार्द्धकम्॥
८ ॥ विषाख्या नाडिका भानां पात मेकार्गलं तथा ॥ दग्धाहं क्रान्ति साम्यञ्च लग्नेशं रिपुस्थ- 
त्सुगम् ॥ ९ ॥ दिनर्क्षं चर जन्यर्क्षं सन्ध्यौ चपल विंशतिम् ॥ मलमासं कवीज्यास्तं बाल्यं वार्द्ध-

क्यमेवच ॥ १० ॥ जन्मेशास्तं मनो भंगं सूतकं मातुरार्तवम् ॥ रोगोत्पाताद्यरिष्टानि शुभेष्वे-
तानि संत्यजेत् ॥ ११ ॥ इति श्रीमहैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्त्तगणपतौ
त्याज्य प्रकरणं समाप्तम् ॥ ६ ॥ ॥ अथ लग्न प्रकरणम् ॥ मेषो वृषोऽथ मिथुनं कर्कः
सिंहोथ कन्यका ॥ तुलाथ वृश्चिको धन्वी मकरः कुम्भ मीनकौ ॥ १ ॥ राशयस्तु क्रमादेते
पुंस्त्रियौ क्रूर सौम्यकौ ॥ ज्ञेयश्चर स्थिरश्चैव द्विस्वभावः क्रमात्तुज ः ॥ २ ॥ पृष्ठोदया धनुर्मेषौ
मकरो वृष कर्कटौ ॥ उभयो दयवान् मीनस्तथान्ये मस्तकोदया ः ॥ ३ ॥ मेषो वृषो धनुर्यु-
ग्मं कर्क नक्रौ निशाबला ः ॥ दिवा बलस्तु तेभ्योऽन्येस्व स्वकाले बलाधिका ः ॥ ४ ॥ अथ रा-
शि स्वामिनः ॥ मेष वृश्चिकयो र्भौमो बुधो मिथुन कन्ययोः ॥ तुला वृषभयोः शुक्रः कर्कटस्य
तु चन्द्रमा ः ॥ ५ ॥ सिंहस्याधिपतिः सूर्य्यः शनिर्मकर कुम्भयोः ॥ धनुर्मीनोभयोर्जीव श्चैते
राशीश्वराः स्मृताः ॥ ६ ॥ अथ ग्रहोच्चानि ॥ मेषो वृषस्तथा नक्रः कन्या कर्क झषास्तुलाः
सूर्य्यादीनां क्रमादेते कथिता उच्चराशय ः ॥ ७ ॥ परमोच्चांशकाः सूर्य्याद्दिशो १० राम ३ ३७
गजाश्विनः २८ ॥ बाराचन्द्र १५ शराः ५ शैलदस्राः २७ स्वाश्वि २० मिताः क्रमात् ॥ ८ ॥

॥ अथ नीचानि ॥ सूर्य्यादीनां जगुर्नीचं स्वोच्च भाद्यच्च सप्तमम् ॥ राहोस्तु कन्यका गेहं मिथुनं
स्वोच्च भं स्मृतम् ॥ ९ ॥ अथ मूल त्रिकोणाम् ॥ सिंहो वृषभ मेषौच कन्या धन्वि तुला घटाः॥
रव्यादीनां क्रमान्मूल त्रिकोणा राशयः स्मृताः॥ १० ॥ अथ मेषादि लग्न कृत्यानि ॥ आका
रो धातु कर्माणि भूमि पाला श्रिये चनम् ॥ विरोधः साहसं चैतन्मेष लग्ने प्रसिध्यति ॥ ११ ॥क्षे
त्र कूपादिकं दानं कुमारी वरणं ध्रुवम् ॥ गृह प्रवेश उद्वाहः सिध्येते तद्वृषोदये ॥ १२ ॥ कला
विभूषा विज्ञानं यत्कार्य्यं वृषभोदये ॥ तत्सर्वं मिथुने प्रोक्तं होरा शास्त्र विचक्षणैः॥ १३ ॥
वारि बंधन मोक्षं च पौष्टिकं चर कर्म च ॥ वापी कूप तडागादि कर्कटे कथितं बुधैः॥ १४ ॥राज
सेवा कृषिः पण्यं पर योगो वणिक्पथः॥ सिंहे सिध्यति तत्सर्वं मेषलग्नोदितं च यत् ॥ १५॥भू
षणं शिल्प विज्ञानमौषधं पौष्टिकं तथा ॥ चरं स्थिरं तु यत्किंचित्कन्या लग्ने प्रसिध्यति ॥ १६॥
वाणिज्यं कर्षणं सेवा यात्रा भांड तुलाश्रयम् ॥ तुला लग्ने समाख्यातं मुनिभिस्तत्त्ववेदिभिः॥
१७॥ राज सेवाभिषेकौ च साहसं दारुणं तथा ॥ उग्रं चौर्य्यं स्थिरं कर्म कर्तव्यं तत्तरी स्वपे ॥ १८॥ 
उद्वाहः पौष्टिकं यात्रा वाहनाग्नि परिग्रहाः ॥ धनुर्लग्ने चरं कर्म कथितं पूर्व सूरिभिः॥ १९ ॥

मु.ग. दासीचतुष्पदोष्ट्राद्य संभसोबंधमोक्षणम् ॥ तथा क्षेत्राश्रयं यात्रायश्च मकरोदये ॥ २० ॥ बीज-
३९ स्य संग्रहं नौकाचार्य्यं वारिगमादिकम् ॥ तथाध्रुवं चरं कार्यं कुम्भे कुर्य्यात्सदा सुधीः ॥ २१ ॥ उद्वा-
हश्चाभिषेकश्च विद्यालंकरणादिकम् ॥ पशुकर्मो बुकार्यं च मीन लग्ने प्रकीर्तितम् ॥ २२ ॥ मेषा-
दिकेषु शुद्धेषु यथोक्तं कर्म सिद्ध्यति ॥ पापेक्षित युतेष्वेषु क्रूरं सिद्ध्येन्न चेतरम् ॥ २३ ॥ अथ ष-
ड्वर्गाः ॥ षड्वर्गो गृह होराख्यो द्रेष्काणोऽथ नवांशकम् ॥ द्वादशांशस्तथा त्रिंशांशकः सुशुभजः
शुभः ॥ २४ ॥ त्रिंशदंशा ३० गृहं राशेरर्द्धं होरेति कथ्यते ॥ द्रेष्काणाः स्यात्तृतीयांशो १० नवमांशो
३।२० नवांशकः ॥ २५ ॥ द्वादशांशोऽद्धि षड्भागः २।३० त्रिंशांश ३० स्त्रिंशदंशकः ॥ लग्नरा-
शिपतिः खेटो ग्रहेशः परिकीर्तितः ॥ २६ ॥ चन्द्रभान्वोः समेराशौ विषमे रविचन्द्रयोः ॥ द्रेष्का-
णेशाः क्रमादाद्य पञ्चांक १।५।९ भवनेश्वराः ॥ २७ ॥ धनुः सिंहोऽथ मेषश्च मेषाद्यास्तु नवां-
शकाः ॥ मकरे वृषभः कन्या मकराद्याः प्रकीर्तिताः ॥ २८ ॥ तुला मिथुन कुम्भाख्याः तुला-
द्याः कथिता बुधैः ॥ कर्काद्यास्ते तु विज्ञेया मीन वृश्चिक कर्कटाः ॥ २९ ॥ द्वादशांशो यथा- ३९
संख्या विज्ञातव्याः स्वराशितः ॥ विषमर्क्षे तु वाणा ५ स ५ वसु शैल शराः ८।७।५ क्रमात्

मु. ग. || ३० || भौमार्कीयज्ञ शुक्राणां त्रिंशांशाः परिकीर्त्तिताः || समर्क्षेतु शर ५ ग्राव ७ वसु ८ बाण
४० ५ शरांशा ५ काः || ३१ || शुक्र सौम्यांगिरो मन्द भौमानांच यथाक्रमम् || ३२|| अथ तन्वादिद्वा-
दश भाव संज्ञा || तनुर्धनं सहोत्थाख्यं ३ सुहृ ४ त्सुता ५ रि ६ योषितः ७ || निधनं ८ धर्मकर्मा ९
१० य ११ व्यया १२ भावास्तनोः क्रमात् || ३३ || केन्द्रं १।४।७।१०। लचसदं २।५।८।११ चापो-
क्लिमं ३।६।९।१२ लग्नात्पुनः पुनः || नवमं पञ्चमं स्थानं ९।५ त्रिकोणं परिकीर्त्तितम् || ३४||
त्रिदशैकादशं षष्ठं प्रोक्तं चोपचयाह्वयम् || जामित्रं ७ सप्तमं द्यूनं द्यूनं च मदनाभिधम् || ३५ ||अ-
रिष्फं तु द्वादशं १२ ज्ञेयं दुश्चिक्यं स्यात्तृतीयकम् || चतुरस्रं तुरीयाख्यं रंध्रमथाष्टमं || ३६||
अथ वर्गोत्तम नवमांशाः || आद्यश्चरे नवांशः स्यात्स्थिरे राशौ तु पञ्चमः || नवमो द्विस्वभावा-
ख्यो शुभो वर्गोत्तमो ह्ययम् || ३७ || अथ साधारण शुभकार्ये लग्ने ग्रहबलञ्च || सर्वेषु शुभ-
कार्येषु नेष्टाः खेटा व्ययाष्टगाः || लग्ने पापारिगौ सौम्याः पापा केन्द्र त्रिकोणगाः || ३८ ||
सौम्याः केंद्र त्रिकोणस्थाः पापास्तु त्रिषडायगाः || ते सर्वे लाभगाः खेटाः श्रेष्ठाः स्युः शुभकर्मणि ३९ ४०
९: भावः स्वपतिना सौम्यैर्दृष्टो युक्तो बलाधिपः || पूर्णं फलं निजं धत्ते व्यस्तं पाप युतेक्षितः || ४० ||

लग्ने चन्द्रौ संशुद्धे प्रोक्तस्थानस्थिते ग्रहे ॥ शुभर्क्षे तिथिवारेषु कार्य्याः सर्वाः शुभाः क्रियाः ॥ ८१ ॥
एतल्लासान्यतः प्रोक्तं ग्रहलग्नबलादिकम् ॥ ८२ ॥ विशेषस्तु यथाशास्त्रं ज्ञेयं स्तत्तन्मुहूर्तकैः ॥
इति श्री मद्दैवज्ञ रावल हरिशंकर॰ लग्न प्रकरणं समाप्तम् ॥ १० ॥ अथ नूतनांबरालंकार प्र-
करणम् ॥ हस्तादि पञ्चके पुष्ये धनिष्ठा रेवती द्वयोः ॥ उत्तरे च पुनर्वस्वौ रोहिणी च शुभे तिथौ ॥
१ ॥ बुध शुक्रेज्यवारेषु नूतनां वर धारणम् ॥ सौवर्णं रत्न रूप्यादि भूषणानां धृतिः शुभा ॥ २ ॥
प्रागुक्त धिष्ण्यवारे च स्वर्णाद्या भरणादिकम् ॥ रक्तं वासो बुधैर्धार्य्यं भौम भास्करयोरपि ३
॥ अथ वार फलम् ॥ जीर्णमर्को विधुश्चान्द्रो भौमः शोकं बुधो धनम् ॥ गुरुर्ज्ञानं प्रयाणाग्निं
भार्गवो मलिनं शनिः ॥ कुर्वन्ति वासराद्येते नूतनाम्बर धारणात् ॥ ४ ॥ अथ नक्षत्र फलम् ॥
वस्त्र प्राप्तिरथाश्विन्यां भरण्यां तद्विनाशनम् ॥ कृत्तिकाग्निभयं कुर्याद्रोहिण्यां सर्वस-
म्पदः ॥ ५ ॥ मृग मूषक भीतिः स्यादार्द्रायां निधनं भवेत् ॥ पुनर्वसौ तथा पुष्ये धन धर्म्म म-
होत्सवः ॥ ६ ॥ आश्लेषायां भवेच्छोको मघायां मरणं ध्रुवम् ॥ राज्ञो भयन्तु पूफाया सुफ- ४१
यां तु धनागमः ॥ ७ ॥ कर्म सिद्धिस्तु हस्तर्क्षे चित्रायां मिष्ट सम्पदः ॥ मिष्ट भोजनदा स्वाती

विशाखवानन्ददायिनी ॥ ८ ॥ मित्राग्निरनुराधायां ज्येष्ठायां वाससांहृतिः ॥ जलप्लुतिश्च मूलर्क्षे
पूर्वाषाढाऽतिरोगदा ॥ ९ ॥ मिष्टान्नदोत्तराषाढा श्रवणो नयनार्त्तिकृत् ॥ धान्यागमो धनिष्ठा-
यां विषभीतिः शतभिषे ॥ १० ॥ पूर्वाभाद्रे जलाद्भीतिरुत्तरायां धनागमः ॥ रत्नावाप्तिस्तु रेव-
त्यां भवेद्वस्त्रस्य धारणात् ॥ ११ ॥ अथ वस्त्राभरणादि धारणे स्त्रीणां विशेषः ॥ अश्विन्यां
च धनिष्ठायां रेवत्यां करपञ्चके ॥ सुवर्णरत्नदन्तादि वस्त्राणां धारणं स्त्रियः ॥ १२ ॥ अथक
ज्जलादर्शकृत्यम् ॥ चित्राचतुष्टये ऽश्विन्यां धनिष्ठारेवतीमृगे ॥ शुक्रेऽर्केऽह्नि शनौ स्त्रीणां-
दर्पणांजनयोर्धृतिः ॥ १३ ॥ अथ सौभाग्यवत्यानिषेधः ॥ रोहिण्यां त्र्युत्तरे पुष्ये पुनर्वस्वौ-
कदाचन ॥ नदध्यात्सुभगा भूषा वस्त्राण्यन्ये कुजेऽपि न ॥ १४ ॥ अथ नववस्त्र विकृतौ फलम्
वाससो नवधा भागे चतुष्कोणे तु देवता ॥ मध्यत्र्यंशस्थितं रक्षो नराः पार्श्वदशांशयोः १५
दग्धे जीर्णे नवे वस्त्रे लिप्ते वा कर्दमादिभिः ॥ ज्ञेयं रक्षोंऽशके नेष्टं शुभं देवनरांशके ॥ १६ ॥ सर्व
प्रांत्येष्वसच्चैवं शयनासनपादुके ॥ १७ ॥ अथ मुहूर्त्तं विनापि कुत्र चिद्वस्त्रधारणं ॥ राज्ञा- 
प्रीत्यार्पितं वस्त्रं विवाहे चोत्सवादिषु ॥ तथा विप्राज्ञया धार्यं निंद्ये धिष्ण्ये ऽपि वासरे ॥ १८ ॥

॥ अथ वस्त्र विशेषे विशेषः ॥ अथ श्वेत पीत कर्बुर रक्त वस्त्र धारणं ॥ शुक्लं वस्त्रोक्तभे धार्यं रवौ ।
शुक्रे गुरौ बुधे ॥ विधुके कर्बुरं पीतं सभौमे रक्तमंबरम् ॥ १९ ॥ अथ कृष्णनीलम् ॥ पुनर्वसु धनि
ष्ठाख्ये ऽश्विभे हस्ताच्चतुष्टये ॥ पूर्वोत्तरे शनौ सूर्ये नीलकृष्णांबरं शुभम् ॥ २० ॥ अथ पट्टदुकूलं॥
जीवेर्के च बुधे शुक्रे वस्त्रोक्तर्से श्रवान्विते ॥ स्थिरेऽगे सद्ग्रहैर्युक्ते पट्टकूलस्य धारणम् ॥ २१ ॥ अ
थ कौशेयम् ॥ अश्विनी रेवती हस्ते रोहिण्यां श्रवणात्रये ॥ पूर्वोत्तरे पुनर्वस्वौ स्वात्यां पुष्ये मघा-
भिधे ॥ २२ ॥ रवौ चन्द्रे गुरौ धार्यं कौशेयं वसनं जनैः॥२३॥अथ रोमज वस्त्रम् ॥ नील वस्त्रोदिते धिष्ण्ये
रेवती पुष्ययोरपि ॥ शुक्रे शनैश्चरेर्के च धारयेद्रोमजाम्बरम् ॥ २४ ॥ अथ सतूल कंचुक धारणा-
म् ॥ पुष्योत्तरानुराधांत्ये धनिष्ठाश्विकरत्रये ॥ रोहिण्यां गुरु शुक्रेऽब्जे देह दुर्गधृतिः शुभा ॥२५॥
अथ सुवर्ण रजत मिश्रित तन्तु सम्भव वस्त्र परिधानम् ॥ सुवर्ण तन्तु संमिश्रं वासो धार्यं रवौ कुजे॥
राजतन्तु ति शुक्रेऽब्जे वस्त्र धारण भे शुभम् ॥ २६ ॥ अथ वस्त्र निर्माणम्॥रेवती रोहिणी चित्राऽनु-
राधा मृगभोत्तरे ॥ शनिं हित्वा कुविंदानां तन्तुभिः पट्टसाधनम् ॥ २७ ॥ अथ कुसुम्भादि वस्त्र- ४३
रंजनम् ॥ पुनर्वसु द्वये हस्त पंचके श्रवणाद्वये ॥ अश्विभेर्के कवीज्यारे वाससां रंजनं शुभम् ॥ २८ ॥

॥ अथ सूचीकर्म ॥ मृगाश्विचित्रानुराधारविपुष्यांते रोहिणीकरः ॥ ज्येष्ठा सहास्तरा: सार्का: सूचीक-
र्मणि संमता:॥ २९ ॥ अथ नवीन वस्त्र क्षालनम् ॥ पुनर्वसुद्वये श्विन्यां धनिष्ठा हस्त पंचके ॥ हित्वा
र्कार्कि बुधान् रिक्तां षष्ठीं श्राद्धदिनं तथा ॥ ३० ॥ व्रतं पर्व च वस्त्राणि क्षालयेद्रजकादिना ॥ ३१ ॥ अथो
पानत् परिधानं चर्म कृत्यं च ॥ चित्रापूर्वानुराधा च ज्येष्ठा श्लेषा मघा मृगे ॥ विशाखा कृत्तिका मूले
रेवत्यां त्वार्कि सूर्य्यजे ॥ उपानत्परिधानं च चर्मकर्मणि शस्यते ॥ ३२ ॥ अथ वितान तूलि कोप-
धानादि निर्माणं वितान बंधनं च ॥ कुर्याद्धस्तोदितेधिष्ण्ये तूलिका मुपधानकम् ॥ वितानाद्यं च
बध्नीयाद् दूर्ध्व मूर्ध्व मुखोडुषु ॥ ३३ ॥ अथ वस्त्र मय गेहादि निर्माणम् ॥ श्रु मि त्रये ऽश्विनी पुष्ये
ऽनुराधा रोहिणी मृगे ॥ हस्तत्रये पुनर्भैत्ये ह्युत्तरे पटवेश्म मतं ॥ ३४ ॥ अथ सुगंध भोगः ॥ श्रु ति
त्रये श्विनी पुष्ये पूर्वाषाढानुराधयोः ॥ हस्तत्रये पुनर्भैत्ये मृग भे च शुभेहनि ॥ ३५ ॥ चन्दनागरु-
कस्तूरी पुष्पाणां धारणं शुभम् ॥ ३६ ॥ अथ शय्या सनादि भोगः ॥ श्रवणे चानुराधायां ह्युत्तरे
रोहिणी मृगे॥ पुनर्वसु द्वये हस्ते चित्रायां रेवतीत्रये ॥ ३७ ॥ भोगः शय्यासनादीनां शुभेवारे शुभेति-
थौ ॥ ३८ ॥ अथ भूषण घट्टनम् ॥ त्रिपुष्कराभिधे योगे ह्युत्तरे रेवतीद्वये ॥ श्रु ति त्रये मृगे पुष्ये

पुनर्वस्वनुराधयोः ॥ हस्तत्रयेथ रोहिण्यां भूषा कार्य्या शुभेहनि ॥ ३८ ॥ अथ रक्तयुक्त भूषा घ-
टनम् ॥ कृत्तिकादित्रये हस्तपंचके रेवतीद्वये ॥ श्रुति त्रये पुनर्वस्वौ पुष्य भे चोत्तरात्रये ॥ कुजेर्के
रक्त सुग्भूषा घट्टनं शुभवासरे ॥ ३९ ॥ अथ रौप्य मय मुक्ता वज्र युक्त भूषणा निर्माणम् ॥ रत्नसु-
ग्भूषणां त्र्यक्षे विशाखया कृत्तिकां विना ॥ शुक्रेज्ये भूषणां रौप्यवज्र मुक्तामयं हितम् ॥ ४० ॥ अथ
क्षुरकर्म ॥ श्रवणा त्रितये हस्त त्रितये रेवती द्वये ॥ ज्येष्ठायां मृग शीर्षे च वैश्वेपुनर्वसु द्वये ॥ ४१ ॥
क्षुरकर्म बुधैः प्रोक्तं त्यक्त्वा भौमं शनिं रविम् ॥ अनुराधा सुफां चैव कृत्तिकां रोहिणीं मघाम् ४२
॥ अथ क्षुर कृत्ये वार फलम् ॥ भानुर्मासं शनिः सप्त भौमोष्टौ नाशयेत्क्षुरकम् ॥ वर्द्धये द्बोध-
नः पञ्च मासान् सप्त विशांपतिः ॥ ४३ ॥ शुक्रस्त्वेकादश क्षेमं क्षौरे वाचस्पतिर्दश ॥ ४४ ॥
अथ क्षौर कार्य्ये त्याज्य तिथयः ॥ अष्टमी प्रति पत्षष्ठी रिक्ता पर्वाणि संत्यजेत् ॥ चतुर्दशी
त्वमावास्या क्षौरे त्याज्या तु सर्वथा ॥ ४५ ॥ अथ निंद्यतिथि नक्षत्राणां दुष्ट फलम् ॥ पंचक्रा-
न्तो मघायां च षट् कान्त्वः कृत्तिका स्वपि ॥ त्रिवारं चानुराधायां रोहिण्या मष्टवारकम् ॥ ४६ ॥ उत्तरा ४५
फाल्गुनी संज्ञे चतुर्थं क्षौर माचरेत् ॥ सर्वेषसा समानो पिया वदब्दं न जीवति ॥ ४७ ॥ अथ-

क्षौर निषेधे पितदपवादः ॥ आज्ञया विप्र राज्ञोर्वाप्याधानेबंध मोक्षणे ॥ मृताशौचे च दीक्षा-
यां मुण्डनं स्यात्तु सर्वदा ॥ ४८ ॥ अथ राज्ञांश्मश्रुकर्म ॥ क्षौरे भस्योदये राज्ञः पञ्चमे ऽह्नि नैव हि ॥
श्मश्रुकर्म समाख्यातं निषिद्धा तारका न चेत् ॥ ४९ ॥ अथ नखदन्त कृत्यम् ॥ ऋक्षेषु क्षौरकर्मो-
क्तं येषु येषु मनीषिभिः ॥ तेषु तेषु च कर्तव्या नखदन्तादिकाः क्रियाः ॥ ५० ॥ अथ क्षौर निषेधः ॥
भुक्तोऽभ्यक्तो व्रती यात्रा रणोद्योगी कृताह्निकः ॥ उत्कटा भरणी रात्रौ सन्ध्ययोरुभयोरपि ५१
शुभेच्छुर्नवमे चाह्नि क्षुरकर्म न कारयेत् ॥ प्राग्वयाः स्नातको राजा योगीन्द्रो गर्भिणी पतिः ॥ स-
जीवत्पितृको नैते मुंड्याः प्राक्कथिता अपि ॥ ५२ ॥ अथ क्षुर कर्मणि शुभावहं वाक्यम् ॥ के-
शव मानर्त्त पुरं पाटलिपुत्रं पुरीं मही क्षितांवा ॥ दिति मदितिं च स्मरतां क्षौर विधौ भवति कल्या-
णम् ॥ ५३ ॥ अथ विद्यारम्भः ॥ मृगादि पञ्चके मूले हस्तादि त्रितये श्विभे ॥ श्रवणत्रय पूर्वा-
सु विद्यारम्भः प्रशस्यते ॥ ५४ ॥ रवौ शुक्रे बुधे जीवे वारे लग्नबले शुभे ॥ दशम्यादि त्रिके षष्ठी
तृतीया पञ्चमीषु च ॥ ५५ ॥ विद्यारम्भे गुरुः शुक्रो बुधः सर्वार्थ सिद्धिदः ॥ मध्योऽर्को जाड्य- ४६
कृच्चन्द्रो भौमार्की मृत्युदौ स्मृतौ ॥ ५६ ॥ अथ गणितारम्भः ॥ शतद्वयेनुराधार्द्रे रोहिणी ।

रेवतीकरे ॥ पुष्ये जीवे बुधे कुर्यात्सारम्भं गणितादिषु ॥ ५७ ॥ अथ व्याकरणारम्भः ॥ रोहि-
णी पञ्चके हस्तात्पुनर्भे मृगभेऽश्विभे॥ पुष्ये शुक्रेज्य विद्वारे शब्दशास्त्रं पठेत्सुधीः ॥ ५८ ॥
अथ न्यायादि शास्त्रारम्भः ॥ त्र्युत्तरे रोहिणी पुष्ये पुनर्भे श्रवणेकरे ॥ अश्विन्यां शतभे स्वातौ
न्याय शास्त्रादिकं पठेत् ॥ ५९ ॥ अथ धर्मशास्त्र पुराणारम्भः ॥ हस्तादि पञ्चके पुष्ये रेवती
द्वितये मृगे ॥ श्रवत्रये शुभारम्भो धर्मशास्त्र पुराणयोः ॥ ६० ॥ अथ वैद्य विद्या गारुडी वि-
द्यारम्भः ॥ हस्तत्रयेऽनुराधायां पुनर्भे श्रवणात्रये ॥ मूले चांत्येश्विनी पुष्ये ज्येष्ठाश्लेषार्द्रभेमृगे
वैद्य विद्या कुजेज्ञेर्के ज्येष्ठाही नेत्र गारुडी ॥ ६१ ॥ अथ जैन विद्यारम्भः ॥ श्रवत्रये मघापूर्वा
नुराधा रेवतीत्रये ॥ पुनर्भे स्वातिभे सूर्य्ये शुक्रे जैनागमं पठेत् ॥ ६२ ॥ अथ फारसी तुरुष्क
शास्त्रारम्भः ॥ ज्येष्ठाश्लेषा मघा पूर्वा रेवती भरणी द्वये ॥ विशाखार्द्रोत्तराषाढा शतभे पाप
वासरे ॥ ६३ ॥ लग्ने स्थिरे स चन्द्रे च फारसी मारबीं पठेत् ॥ ६४ ॥ अथ लेखनारम्भः ॥ शुभे-
तिथौ शुभेवारे रेवती युगले तथा ॥ श्रवणे चानुराधायां तथैवार्द्रादिषु त्रिषु ॥ हस्तादि त्रितये कुर्या- ४७
ल्लेखनारंभणं सुधीः ॥ ६५ ॥ अथ रत्न परीक्षा ॥ पुनर्भे शत हस्तर्क्षे श्रवो ज्येष्ठा परीक्षणम् ॥ रत्ना-

नासष्टमीं भूतांहित्वा भौम शनैश्चरम् ॥ ६६ ॥ अथ शिल्प विद्यारम्भः ॥ हस्तत्रये श्रवत्र्यर्द्धे उत्तरे
रोहिणी मृगे ॥ रेवत्या मश्विनी पुष्ये पुनर्वस्वनुराधयोः ॥ शस्ते तिथौ शुभेवारे शिल्प विद्यां समा-
चरेत् ॥ ६७ ॥ अथ राज दर्शनम् ॥ उत्तरे श्रवणा द्वंद्वे मृगे पुष्यानुराधयोः ॥ रोहिणयां रेवती यु-
ग्मे चित्राहस्ते शुभेऽहनि ॥ बलिन्यर्कैर्कवारेपि राज दर्शन मीरितम् ॥ ६८ ॥ अथ राज सेवा ॥ ह-
स्तद्वये नुराधायां रेवती युगले मृगे ॥ पुष्ये बुधे गुरौ शुक्रे सत्तिथौ रविवासरे ॥ ६९ ॥ योनिराशि-
मयो मैत्र्यां स्वामी सेव्योनु जीविभिः ॥ ७० ॥ अथ दासी संग्रहः ॥ उत्तरा सु च रोहिणयां दासदा-
स्यादि संग्रहः ॥ ७१ ॥ अथ राज्ञां छत्र चामर सिंहासनादि कृत्यम् ॥ चामर छत्र दोला दीन् द्वीपि-
सिंहासनादिकम् ॥ पट्टाभिषेक भे सर्वं विदध्याच्छोभने दिने ॥ ७२ ॥ अथ मुद्रा करणम् ॥
उत्तरे चानुराधायां श्रवणा त्रितये तथा ॥ पुनर्वसु द्वये हस्त त्रितये रेवती युगे ॥ ७३ ॥ मृग-
शीर्षे च रोहिणयामष्टमी पंचमी दिने ॥ तृतीयायां त्रयोदश्यां दशम्यां पूर्णिमा तिथौ ॥ ७४ ॥
त्यक्त्वा शनैश्चरं सोमं मुद्रा कार्य्यं प्रशस्यते ॥ ७५ ॥ अथ गजाश्वाद्या रोहणम् ॥ रेवती युग- ४८
ले हस्त त्रये कर्ण त्रये मृगे ॥ पुनर्वसु द्वये कुर्याच्छनि भौमान्य वासरे ॥ गजाश्वरथ मुख्याना-

मारोहणञ्च शुभेतिथौ ॥ ७६ ॥ अथ शिविकारोहणं तत्कृत्यञ्च ॥ उत्तरा रेवती युग्मे त्रिभेह-
स्तात्त्रिभेश्रवणात् ॥ पुनर्वस्वोस्तथा पुष्येनुराधा द्वितये मृगे ॥ रोहणं शिविकायास्तु सल्लग्ने
घटनं तथा ॥ ७७ ॥ अथ गज कृत्यम् ॥ श्रवणादि त्रये हस्त त्रये वा रेवतीद्वये ॥ मृगे पुष्येनु-
राधायां रोहिण्यां श्रुत्तरे तथा ॥ ७८ ॥ पुनर्वसौ शुभे वारे गजकार्यं शनेर्दिने ॥ ७९ ॥ अथ गज-
स्यांकुशः ॥ अंकुशाः करिणां योज्याः शनेर्लग्ने शनेर्दिने ॥ ८० ॥ अथाश्व कृत्यम् ॥ शुभेऽह-
नि तथा हस्ते धनिष्ठा रेवती युगे ॥ पुनर्वसु द्वये स्वाती मृगशीर्षे शताभिधे ॥ वर्जयित्वा कुजं रि-
क्तामश्व कार्य्यं शुभावहम् ॥ ८१ ॥ अथ पल्याणादि निर्माणम् ॥ श्रवणे शतभे हस्ते पुष्ये
मूले मृगेश्विभे ॥ पुनर्वसौ गजाश्वोष्ट्र पल्याण करणं शुभम् ॥ ८२ ॥ अथाश्वस्य विशेषकृ-
त्यानि ॥ चौलोक्ते खर कृत्यानि शिक्षा विद्योक्त भादिषु ॥ घास ग्रासादिकं त्वन्नाशनोक्त
र्क्षेषु वाजिनाम् ॥ ८३ ॥ अथ रथ कृत्यम् ॥ पुष्ये पुनर्वसु ज्येष्ठानुराधा रेवतीद्वये ॥ श्रवणादि
त्रिभे हस्त त्रितये रोहिणी मृगे ॥ ८४ ॥ सार्के सौम्य दिने सौम्य विलग्ने रथ कर्म सत् ॥ ८५ ॥ 
अथ शस्त्र घट्टनम् ॥ कृत्तिका सु विशाखायां भौमार्क शनिवासरे ॥ सल्लग्ने घटितं शस्त्रं नृपाणां

जयदायकम् ॥ ८६ ॥ अथ शस्त्र धारणम् ॥ पुनर्वसुद्वये हस्त चित्रायां रोहिणीद्वये ॥ विशा-
खादित्रये कुर्य्याच्चुत्तरे रेवतीद्वये ॥ ८७ ॥ रिक्तां विना तिथौ सूर्य्य शुक्रजीव दिने तथा ॥ सन्नाह
च्छुरिका खड्ग कुंत शस्त्रादि धारणम् ॥ ८८ ॥ अथ धनुर्विद्यारम्भः ॥ अनुराधा मघा पुष्य मृग
शीर्षेष्टमी तिथौ ॥ धनुर्विद्यादिकं कार्य्यं द्वादश्यां शुभ वासरे ॥ ८९ ॥ अथ कुन्तादि सर्व शस्त्रा-
भ्यासः ॥ हस्तत्रयोत्तरे श्विन्यां पुनर्भे श्रव पुष्ययोः ॥ शुभाहे विबुधे खड्ग कुन्तादींश्च समभ्यसे-
त् ॥ ९० ॥ अथाग्नि शस्त्र घट्टनं धारणांच ॥ विशाखा कृत्तिका पूर्वा मघा श्लेषा श्विनी मृगे ॥
मूलार्द्रा भरणी ज्येष्ठे सजीवे क्रूर वासरे ॥ घट्टनं धारणं प्रोक्तं वह्नि शस्त्रस्य शोभनं ॥ ९१ ॥
अथ नालिकास्त्र्याग्नि शस्त्र कृत्यम् ॥ आश्लेषा कृत्तिका मूल ज्येष्ठार्द्रा भरणी श्रवे ॥ पूर्वा हस्त-
चतुर्ष्वन्त्ये पुनर्वसु मघाह्वये ॥ ९२ ॥ रिक्ता जयासु पापाह्ने नालिकास्त्र विधिः शुभः ॥ ९३ ॥ अ-
थ शत्रु चोर बंधनं ताडनंच ॥ ज्येष्ठार्द्रा भरणी पूर्वा मूला श्लेषा मघाह्वये ॥ क्रूर खेट युते लग्ने क्रूरमंदास
वासरे ॥ शत्रूणां बंधनं कुर्य्यात्क्लेशाभिस्ताडनं तथा ॥ ९४ ॥ अथ शत्रु संधिः ॥ अनुराधा मघा ५०
पुष्ये तिष्यर्धे तैतिलासिते ॥ लग्ने सद्दृष्टि रोहिण्यां द्वादश्यां संधिरिष्यते ॥ ९५ ॥ अथ मद्यारंभः ॥

मूलार्द्राशतभेज्येष्ठा पूर्वाश्लेषा मघासु च ॥ भरण्यां क्रूरवारे च मद्यकर्मेरितं बुधैः ॥ ९६ ॥ अथ मादक वस्तु भक्षणम् ॥ आर्द्रा श्लेषा मघा पूर्वा ज्येष्ठा मूल शताभिधे ॥ भरण्यां बुदिने मन्दे चाऽश्नीयान्मादकं मधु ॥ ९७ ॥ अथ नवांगना भोगः ॥ प्रथमाभिगमः शस्तो नववध्वाः शुभेहनि गर्भाधानोक्त नक्षत्रे शस्तेज्योत्स्नाकरे निशि ॥ ९८ ॥ अथ गीत नृत्यारम्भः ॥ रेवत्या मनुराधायां धनिष्ठादिद्वये करे ॥ रोहिणी युगले पुष्ये अुत्तरे गीत नर्त्तने ॥ ९९ ॥ अथ नट नर्त्तकी कृत्यम् ॥ स्वमार्द्रा रोहिणी पुष्ये पुनर्भे श्रवणात्रये ॥ चित्रात्रयोत्तरा मूले कृत्यं शृंगारजीविनाम् ॥ १०० ॥ अथ दुन्दुभी मृदंगादि करवाद्यम् ॥ हस्तत्रयेनुराधान्त्ये पुनर्वसुयुगेश्विभे ॥ श्रवत्रये मृगेर्केऽह्नि शुभे पूर्णाजया सु च ॥ शुभे दुन्दुभि भेर्यादि करवाद्यं समीरितम् ॥ १०१ ॥ वंशाद्यं मुखवाद्यन्तु पूर्वेष्वेव समीरितम् ॥ १०२ ॥ अथ मृगया ॥ आश्लेषा भरणी ज्येष्ठा पूर्वार्द्रा स्वाति मूल भैः ॥ विशाखायां च पापेह्नि यायाद्दा खेटकन्नृपः ॥ १०३ ॥ अथ जल यन्त्र मार्ग क्रिया ॥ पूर्वाश्लेषा मघा मूले शत पुष्येऽम्बु चारिणी ॥ लग्ने व्यार्किकुजे वारे जल यन्त्र क्रिया शुभा ॥ १०४ ॥ वा रोहिणी तो दिन भं क्रमेण मध्यादि रुद्रां तदिशं त्रिभिर्भैः ॥ मध्येन्दु पार्श्वुत्तर रुद्र

दिग्भैः शुभंच वह्नित्रय वायुदिस्त्व सदितिज्योतिर्विदा भरणी ॥ १०५ ॥ अथ वापी कूप तडागादी
नामारम्भः ॥ अनुराधा मघा हस्त रेवती मूत्तरात्रये ॥ रोहिणी युगले पुष्ये धनिष्ठा द्वितये तथा
॥ १०६ ॥ पूर्वाषाढा मिथेनैव शुभे मासि शुभे दिने ॥ वापी कूप तडागानामारम्भः कथितो बु-
धैः ॥ १०७ ॥ अथ वृक्ष लतादि रोपणामारम्भ कृत्यम् ॥ हस्त चित्रोत्तरा मूलेनुराधा रेवती द्वये ॥
विशाखा रोहिणी पुष्ये प्यारा रोपि मृगे शुभा ॥ १०८ ॥ अथ नौका कृत्यम् ॥ ज्येष्ठो भयं विशा-
खार्द्रा रोहिणी भरणी द्वयम् ॥ आश्लेषां च विहायान्य नक्षत्रेर्के गुरौ मृगे ॥ सल्लग्ने सत्तिथौ
नावो घट्टनं तारणां शुभम् ॥ १०९ ॥ अथ सामान्यतः पशु कृत्यं रक्षा च ॥ त्यक्त्वाष्टमी मसां रि-
क्तां रोहिणी सुत्तरात्रयम् ॥ चित्राख्यं श्रवणां भौमं पशूनां सर्वकर्म च ॥ ११० ॥ प्रवेश निर्गमौ ॥
धनिष्ठा द्वितये पूर्वा-
चापि न त्याज्यं निजयोनिभम् ॥ १११ ॥ अथोष्ट्र महिष्यादि कृत्यम् ॥ ११२ ॥ अथ स्वा-
षाढा तिर्यङ्मुखोडुषु ॥ आजावि महिषोष्ट्राणां कृत्यं चाश्वतरी शुनाम् ॥ उत्तरा सु शुभं
दिवन चारि शृंगी कृत्यम् ॥ ज्येष्ठा स्वात्यश्विनी पुष्ये पुनर्भे रोहिणी करे ॥ ज्येष्ठार्द्रा रोहिणी हस्ते
कृत्यं शृंगिणां वन चारिणाम् ॥ ११३ ॥ अथ नख कृत्यम् ॥ 

विशाखा पुष्य भेश्विभे ॥ क्रूराहे व्याघ्र मुखानां कृतंनख बलीयसाम् ॥ ११४ ॥ अथ पशूनां
क्रय विक्रयौ ॥ विशाखा रेवती पुष्ये धनिष्ठा शत भेश्विभे ॥ हस्ते पुनर्वसु ज्येष्ठे पशूनां क्रय वि-
क्रयौ ॥ ११५ ॥ अथ पक्षि कृत्यम् ॥ शुभाहे सखौ तिर्यङ्मुखे चोर्ध्व मुखेपि भे ॥ सारिका शुक
मुखानां पक्षिणां कृत्य मुत्तमम् ॥ ११६ ॥ अथ सर्व वस्तु क्रयः ॥ शततारा श्विनी चित्रा श्रव-
णा स्वाति भेषु च ॥ रेवत्यां चक्रयः श्रेष्ठो विक्रयोन कदाचन ॥ ११७ ॥ अथ सर्व वस्तु विक्रयः
विशाखा कृत्तिका श्लेषा भरणी पूर्विकात्रये ॥ विक्रयः सत्तियावेषु कर्तव्यो न क्रयः शुभः ११८
अथ गृहे क्षेत्रादि भूमि क्रय विक्रयौ ॥ जीव शुक्रे चनंदास्तु पूर्णायां मूल भे मृगे ॥ पूर्वा श्लेषा मघान्त्ये
च विशाखा द्वितये तथा ॥ ११९ ॥ पुनर्भे मुनि भिः प्रोक्तं क्रय विक्रयणं भुवः ॥ १२० ॥ अथ वा-
णिज्यम् ॥ अनुराधोत्तरा पुष्ये रेवती रोहिणी मृगे ॥ हस्त चित्राश्विभे कुर्याद्वाणिज्यं दिवसे शुभे
॥ १२१ ॥ अथ निधि द्रव्यादि वृद्धि संग्रहौ ॥ पुष्ये मृगे ऽनुराधायां श्रवणा त्रितये श्विभे ॥ पुनर्भेन्त्ये
विशाखायां निधेर्वृद्धिश्च संग्रहः ॥ १२२ ॥ अथ द्रव्य निधीनां शुभ स्थाने स्थापनम् ॥ धनिष्ठो फा- 
विशाखाख्ये पूर्वाषाढा भिधेन्त्यभे ॥ रोहिण्यां च निधेर्भूमौ स्थापनं शुभमीरितम् ॥ १२३ ॥ अथ

द्रव्ययोगः ॥ श्रवणादित्रिभे चित्राचतुष्के रेवतीद्वये ॥ पुनर्वसु मृगे पुष्ये शुभो द्रव्यप्रयोगकः
॥ १२४ ॥ संक्रान्तौ वृद्धियोगे तु हस्तर्क्षे रविसौमयोः ॥ नच ग्राह्यमृणं यस्मात्तद्वंशे तत्स्थिरं भवेत्
ऋणच्छेदं तथा कुर्याद्धनं देयं नवै बुधे ॥ १२५ ॥ अथ धान्यादिविक्रयः ॥ रोहिण्यां विक्रयो-
ऽन्नस्य धनिष्ठा शतभोत्तरे ॥ १२६ ॥ अथ रससंग्रहः ॥ रससंग्रहणं श्रेष्ठं तोयारम्भो दितौध्रुवे
॥ १२७ ॥ अथ वृद्ध्यर्थे धान्यप्रयोगः ॥ विशाखा रोहिणी ज्येष्ठा पुनर्भे ऽश्वि शतत्रये ॥ उत्तरे-
स्वाति पुष्ये तु धान्यवृद्धिः शुभेरिता ॥ १२८ ॥ अथ हलप्रवाहः ॥ पुनर्वसुद्वये मूले उत्तरे रोहि-
णीद्वये ॥ हस्तत्रये ऽनुराधायां रेवत्यां श्रवणात्रये ॥ तिथौ वारे शुभे ऽश्विन्यां हलप्रवहणं शुभम्
॥ १२९ ॥ अथार्कस्य भुक्तनक्षत्राद्धलचक्रम् ॥ सूर्य्यस्य भुक्तनक्षत्राद्रामा ३ ष्टक ११ नवा २०
ष्टकम् । २८ । अशुभं च शुभं ज्ञेयं हलचक्रे क्रमेण भम् ॥ १३० ॥ अथ बीजोप्तिसूर्यचक्रं राहुन-
क्षत्रात् ॥ हस्तत्रये मघा पुष्ये उत्तरे रोहिणीद्वये ॥ धनिष्ठा रेवती मृगभे तथा मूलानुराधयोः ५४
॥ १३१ ॥ शुभे वारे तिथौ ज्येष्ठा बीजोप्तिस्त्वथ राहुभात् ॥ अष्टा ८ ग्नीं ११ दु १२ त्रयं
२५ चैकं २६ त्रयें २९ दु २० त्रि २३ चतुष्टयम् २७ ॥ १३२ ॥ असच्छुभं क्रमाज्ज्ञेयं दिनर्क्षं फणि-

चकारास् ॥ २३३ ॥ अथ शस्यारोपणम् ॥ हस्तत्रयोत्तरा मूले धनिष्ठा रोहिणी मृगे ॥ पुष्या-
श्विन्यनुराधायां मघायां शुभवासरे ॥ २३४ ॥ त्यक्त्वा रिक्ताः शनिं भौमं शस्यस्यांकुररोपणा-
द ॥ २३५ ॥ अथ शस्यवृक्षलतादीनां वापनं जलेन सेचनं च ॥ शस्यारोपोदिते काले हित्वा-
ज्ञार्कौ मघां करम् ॥ वृक्षशस्यलतादीनां प्रशस्तं जलसेचनम् ॥ २३६ ॥ अथ धान्यछेदः ॥
पूर्वोत्तरा मघा श्लेषा ज्येष्ठार्द्रा श्रवणा द्वये ॥ भरणी द्वितये मूले मृगे पुष्ये करत्रये ॥ धा-
न्यच्छेदः शुभो रिक्तां हित्वा भौमशनैश्चरौ ॥ २३७ ॥ अथ कणमर्दनम् ॥ अनुराधाश्वो मूलरे-
वत्यां च मघात्रिभे ॥ ज्येष्ठायां चैव रोहिण्यां शुभं स्यात् कणमर्दनम् ॥ २३८ ॥ अथ धान्या-
नयनं फलपुष्योत्तराणां च ॥ रोपणोदित नक्षत्रे वासरे मन्दभौमयोः ॥ अन्नस्यानयनं पुष्य
फलाद्युत्तराणां च सत् ॥ २३९ ॥ अथ सूपाद्यन्नादिपाकक्रिया ॥ मूलचित्रानुराधासु वि-
शाखा कृत्तिका मृगे ॥ उत्तरा रोहिणी ज्येष्ठा रेवतीषु च विक्रिया ॥ २४० ॥ त्यक्त्वा संकुच
रं लवनं पक्षरंध्रतिथिं शनिम् ॥ २४१ ॥ अथ नवान्नविधिर्नवान्नप्राशनं फलमूलाशनं च ॥ हस्त-
चित्रानुराधान्त्ये रोहिणी श्रवणाद्वये ॥ मृगाश्विन्युत्तरा स्वर्के शुभे वारे तिथावपि ॥ नवान्न

मु·ग स्यविधानंच प्राशनं फल मूलयोः ॥ १४२ ॥ अथ कोष्ठादौ धान्य स्थितिः ॥ पुनर्भे मृगशीर्षेन्त्ये
५६ नुराधा श्रवणात्रये ॥ हस्तत्रये श्विनी पुष्ये रोहिण्याया मुत्तरात्रये ॥ १४३ ॥ गुरौ शुक्रे रवींद्वोः स-
त्कोष्ठादौ धान्य रक्षणम् ॥ १४४ ॥ अथ बीज संग्रहः ॥ हस्तत्रये पुनर्वस्वौ रोहिण्यां श्रवणा द्वये ॥
स्थिरे लग्ने शुभे वारे विचन्द्रे बीज संग्रहः ॥ १४५ ॥ अथ तृण रज्जु सिर्धान्य बन्धनम् ॥ स्वातौ मू-
ले च हस्तेन्त्ये भाद्रा षाढाद्वये मृगे ॥ रोहिण्यां कोष्ठ कोष्ठान्त धान्य संरक्षणं शुभम् ॥ १४६ ॥
अथ धर्म्म क्रिया ॥ रेवती द्वितये हस्त त्रितये रोहिणी द्वये ॥ श्रवत्रयोत्तरा पुष्ये पुनर्वस्व नुराध
योः ॥ १४७ ॥ ज्ञेज्य शुक्रेन्दु सूर्य्येषु ज्ञेज्य षड्वर्ग शालिनि ॥ लग्ने जीव युते जीवे बलिष्ठे धर्ममा-
चरेत् ॥ १४८ ॥ अथ शान्तिक पौष्टिकं कर्म ॥ पुनर्वसु द्वये स्वाती श्युत्तरे श्रवणा त्रये ॥ रेवती
द्वितये हस्ते नुराधा रोहिणी द्वये ॥ शान्तिकं पौष्टिकं कर्म पुण्याहे कीर्त्तितं बुधैः ॥ १४९ ॥
अथ होमादौ खेटाहुति फलं सूर्य्य नक्षत्रात् ॥ रवौ ३ बुधे ६ भृगौ ९ मन्दे १२ चन्द्रे १५ भौमे १८
गुरौ २१ राहौ २४ केतौ २७ च सूर्य्य भात्त्रयं प्रत्येकं भ त्रये क्रमात् ॥ १५० ॥ होमाहुतिः खले- ५६
०५ ःनित्या शुभदा सुख खेचरे ॥ १५१ ॥ अथ होमादौ वह्नि वास फलम् ॥ तिथि वार युतां सैकां चतुर्भि-

र्भौजयेदिमाम्॥ शेषे गुरौ ऽभ्रे भूमौ च वह्निर्होमे शुभप्रदः॥ नेष्टः स्वर्गे ह्येकशेषे द्विशेषे धोप्यनि-
ष्टकृत॥ १५२॥ अथ मंत्रादिदीक्षा॥ रोहिण्यां त्र्युत्तरे मौंजीबंधनोदितभादिषु॥ मंत्रदीक्षा शु-
भे चाह्नि ग्रहणे प्यागमोदिता॥ १५३॥ अथ दीक्षाकुण्डली रुद्रयामलतो॥ षट्त्र्येकादशगो दि-
तो दिनकरस्त्रिद्व्याय षष्ठे शशी लग्नात्सौम्यकुजौ शुभावुपचये केन्द्रत्रिकोणे गुरुः॥ शुक्रः षट्त्रि-
नवान्त्यगोऽष्टमसुतद्व्येकादशे मन्दजो लग्नांशादिगुरुस्तु चन्द्रमहसां सौरेश्च दीक्षाविधौ १५४
अथ मंत्रग्रहणचक्रम्॥ सेजर्क्षैस्या ४ माविशी ६ च चत्वारीन्द्र १४ सैतस्तया १७ सप्तैकविं-
शा २१। २७ शस्तानि मंत्रग्रहणचक्रके॥ १५५॥ अथ मंत्रयंत्रव्रतोपवासादि॥ उफाहस्ताश्वि-
नीकर्णा विशाखा मृगभे हनि॥ शुभे सूर्ययुते शस्तं मंत्रयंत्रव्रतादिकम्॥ १५६॥ अथ वीरसाधनम्
मघार्द्रा भरणी मूले मृगे गेऽसबुधे घटे॥ शुद्धाष्टमे भृगौ तुर्ये वीरवेतालसाधनम्॥ १५७॥ अथौ-
षधकरणं तत्सेवनं च॥ हस्तत्रये ऽनुराधायां मूले पुष्ये श्रवत्रये॥ मृगभे रेवती युग्मे पुनर्व-
स्वौ विजन्मभे॥ १५८॥ शेंदु शुक्रेज्य सूर्याणां वासरे सत्तिथावपि॥ द्विःस्वभावे शुभे लग्ने
शुद्धे द्यून मृति व्यये॥ भैषज्यं शुभदं प्रोक्तं योगे चायुष्यदायिनि॥ १५९॥ अथ रसोत्पादनम्॥

विशाखा कृत्तिका मूले धनिष्ठाश्विकरे मृगे ॥ ज्येष्ठायामार्द्रभे सौम्ये वासरेषु रसक्रिया ॥ १६० ॥ अथ रस सेवनम् ॥ हस्तत्रयेश्विनी पुष्ये नुराधान्त्ये श्रवत्रये ॥ पुनर्भे मृगशीर्षेर्के भौमेज्ये रस भक्षणम् ॥ १६१ ॥ अथ वात रोगादौ तैलोपवेशनम् ॥ हित्वा श्लेषा मघा मूलं हीशार्द्रा भरणी द्वयम् ॥ मन्देज्ये ज्ञे स्थितिस्तैले तृतीयादि त्रिके तिथौ ॥ १६२ ॥ अथ रक्त मोक्षणं विरेक वमनंच ॥ हस्तत्रये श्विनी पुष्ये शतभे रोहिणी द्वये ॥ श्रवणे चानुराधायां ज्येष्ठायां रक्त मोक्षणम् ॥ १६३ ॥ गुरु भौमार्क वारेषु कार्यं शुभ तिथौ तथा ॥ विरेको वमनं शुक्रे चन्द्रे चैवोक्त भादिषु ॥ १६४ ॥ अथ तप्त लोह दाहः ॥ शत चित्राश्विनी मूले विशाखा कृत्तिकार्द्रभे ॥ ज्येष्ठा श्लेषा कुजेर्के गेक्रूर लोहाग्नि भैषजम् ॥ १६५ ॥ अथ धन संग्रहः ॥ ब्रह्मानलार्क मघ मूल त्रिय त्रिपूर्वा पौष्णानुराध गुरु विष्णु विशाख युक्ते ॥ वारे कुजार्क भृगुनन्दन सोमजानां मित्थं च काल धन सं ग्रहणं नराणाम् ॥ १६६ ॥ एव मुक्तर्क्षेषु पूर्वाभाद्ररेवत्योर्धनिष्ठादि पञ्चकेषु संग्रहः कार्यः ॥ अथ रोगोत्पत्तौ नक्षत्र वशात्पीडादिन संख्या अश्विनी कृत्तिका मूले ज्वरार्तो नववासराः ॥ रोहिण्या मुत्तरे भाद्रे पुनर्वस्वो च पुष्य भे १६७

उफायां वासराः सप्त मघायां विंशतिस्तथा ॥ शततभे भरणी चित्राश्चव चैकादशाः ११ रे-
स्वतः ॥ १६८ ॥ धनिष्ठायां विशाखायां हस्तभे पक्ष १५ मेव च ॥ मासं मृगोत्तराषाढे ३०
हान्याद्दन्त्यानुराधयोः ॥ पीडां भुक्त्वा दिनै रात्रौ सुखी स्यात्तदनन्तरम् ॥ १६९ ॥ अथ रो-
गोत्पत्तौ अशुभ फलम् ॥ पूर्वात्रये तथा श्लेषा ज्येष्ठार्द्रा स्वाति भेष्वपि ॥ रोगोत्पत्तिर्भवे-
द्यस्य मरणं तस्य निश्चितम् ॥ १७० ॥ अथ रोगोत्पत्तावनिष्टयोगः ॥ आश्लेषा भरणी
स्वाती पूर्वा भाद्रपदे तथा ॥ शतभे पापवारे च प्रतिपद्द्वादशी दिने ॥ १७१ ॥ चतुर्दश्यां तथा
षष्ठ्यां पूर्णिमायां ज्वरोदयः ॥ स नरो मृत्युमाप्नोति स्वर्वैद्येनापि रक्षितः ॥ १७२ ॥ अथ
रोगाद्युपद्रवे सति दोषज्ञानं प्रश्नलग्नात् ॥ मेषे तु पित्तदोषः स्यादुष्णां शोत्रविवर्णता ॥
वृषे स्वदेवता भूतो दुःस्वप्नो नेत्ररुग्ज्वरः ॥ १७३ ॥ महामाया भवो दोषो द्वन्द्वे वेलानिल-
ज्वरः ॥ कर्कटे शाकिनी दोषो मौनं हास्यं च रोदनम् ॥ १७४ ॥ सिंहे प्रेतस्य दोषस्तु वैमनस्यं
हिमज्वरः ॥ कन्यायां खेटजो दोषो व्यथा क्रोधोऽरुचिर्भवेत् ॥ १७५ ॥ तुलायां क्षेत्र- 
पालस्य दोषः सन्तानपीडनम् ॥ नागदोषोऽलिभे दाहो देहेस्मिन् बुद्धिनाशनम् ॥ १७६ ॥

दोषोधनुषि देहोत्थः शोकौदर्य रुजांज्वरः ॥ शंपादोषो मृगे देह भंगोत्रानिलजोज्वरः ॥ १७७ ॥
दुष्ट प्रेत भवो दोषो देह पीडा घटे भवेत् ॥ दोषो मीने तु योगिन्याज्वरो मानस विभ्रमः ॥ तल्लग्ने त-
त्र चन्द्रे वा ज्ञेयं फल मुदाहृतम् ॥ १७८ ॥ अथ प्रश्न लग्ने ग्रह वशाद्दोष ज्ञानम् ॥ क्षेत्रपाल भवोदो-
षो लग्नेन्त्ये चाष्टमे रवौ १।१२।८ ॥ लग्नारि निधनान्त्ये।१।६।८।१२ चन्द्रे नभो देवी समुद्भवः ॥
१७९ ॥ शाकिन्या दूषणं भौमे द्वादशैकादशे तथा १२।११ ॥ सप्तमे द्वादशे सौम्ये वनदेवी-
समुद्भवः ॥ १८० ॥ देव दोषस्तु जामित्रे रिःफे ७।१२ चित्र शिखंडिजे ॥ अन्त्ये वा सप्तमे १२।७
शुक्रे दोषो भूदेवतोद्भवः ॥ १८१ ॥ वात भयस्तु शारीरो रिःफ १२।७ जामित्र गे शनौ ॥ सिंहि-
कानन्दने रिःफे १२ सप्तमे प्रेत सम्भवः ॥ १८२ ॥ लग्नाद्धह्मारिधर्मान्त्ये ३।६।९।१२ पापैः
खेटैः स्वके कुले ॥ विष शस्त्र जले मृत्यु मायुर्वा दोषर्ध्दरितः ॥ १८३ ॥ सूर्ये हाला हले भौमे
शस्त्रैर्मन्दे जलोर्मिभिः ॥ राहौ रोगै र्व्रतानां स्युर्दोषा आयोक्ति मस्थिते ॥ १८४ ॥ दश मस्थे-
बुधे मार्ग देव्याः प्रेत भवो गुरौ ॥ शुक्रे दोषस्तु देवोत्थः पापे दुः शाकिनी भवः ॥ १८५ ॥ स्व-
र्क्षे स्वगोत्रजो दोषः समेत्वन्य कुलोद्भवः ॥ १८६ ॥ अथ रव्यादिषु बलिष्ठेषु वासरेषु वा दोषः

कुदृष्टिसम्भवः सूर्य्ये पित्तदोषो निशाकरे ॥ मंगले शाकिनीदोषो व्योमदेवीभवो बुधे १८७
गोत्रदेवीभवो जीवे जलदेव्यास्तु भार्गवे ॥ प्रेतपीडा शनौ सर्वं शान्त्या शान्तिमुपैति तत् ॥
१८८ ॥ साध्या दोषाः स्वकीयर्क्षे स्वोच्चे चन्द्रे बलान्विते ॥ असाध्या विबुधे नीचे स्थिते श-
त्रुगृहंगते ॥ १८९ ॥ साध्याः सौम्यग्रहैर्दोषा बलिभिः केन्द्रसंस्थितैः ॥ असाध्याः खेचरैः
पापैः केन्द्रगैर्बलशालिभिः ॥ १९० ॥ यद्दोषः पूजनं तस्य कुर्यात्तद्दोषशान्तये ॥ जलदेव्या
जले व्योमदेव्या व्योम्नि बलिं त्यजेत् ॥ १९१ ॥ शाकिनी डाकिनी भूतदोषे तच्चत्वरे तथा ॥
तदुद्देशेन दृग्दोषे चत्वरे धारयेद्बलिम् ॥ १९२ ॥ गोत्रदेव्युद्भवे दोषे कुलदेवीं प्रपूजयेत् ॥ पि-
तृदोषे तु कर्तव्यो नारायणबलेर्विधिः ॥ १९३ ॥ प्रेतश्राद्धं त्रिपिंडाख्यं विधेयो सर्पणा मख
॥ १९४ ॥ इति दोषज्ञानम् ॥ अथ सर्पदंशे अनिष्टम् ॥ विशाखा कृत्तिका मूले रेवत्यार्द्राम-
घासु च ॥ त्र्यर्क्षे श्लेषाभिधाने च सर्पदष्टो न जीवति ॥ १९५ ॥ अथ रोगनिर्मुक्तस्नानम् ॥
मघा पुनर्वसु स्वाती रोहिणी सूत्तरात्रये ॥ आश्लेषायां च रेवत्यां भार्गवे चन्द्रवासरे ॥ १९६ ॥ 
॥ नस्नायाद्रोगनिर्मुक्तः शुभे चन्द्रे तथैव च ॥ रिक्तायां निशि भौमार्कवासरे चरलग्नके १९७

दुष्टचन्द्रे तथा विष्ट्यां पाताद्यैर्दूषिते ऽहनि ॥ रोगिमुक्तो नरः स्नायाद्दानं कुर्य्यात्तदनन्तरम् ॥
१९८ ॥ अथ रक्तमोक्षणानन्तरं स्नानम् ॥ पौष्णिके रक्तक्षे तु स्नानकाले शुभं मतम् ॥
रोगिणो रुधिरस्नाने निंद्यकाले तु तत्स्मृतम् ॥ १९९ ॥ अथ रोगनिर्मुक्तस्य बहिर्गमनम्
सद्वारे गमनोक्तर्क्षे सत्तिथौ शोभने विधौ ॥ सल्लग्ने रोगमुक्तस्य बहिर्निःसरणं शुभम् ॥
२०० ॥ अथ होलिकोत्सवस्नानम् ॥ यत्नः पुरोपि सच्चन्द्रे शोभनर्क्षे शुभे तिथौ ॥ होलिका-
नन्तरं स्नायाद्धि मन्दारदिने प्रजा ॥ २०१ ॥ अथ मल्लक्रियाः ॥ ज्येष्ठार्द्रा भरणी पूर्वा मू-
लाश्लेषा मघाभिधे ॥ जयापूर्णासु सद्वारे सार्के शीर्षोदये ऽशके ॥ २०२ ॥ सत्खेटैः के-
न्द्रगैः सार्के मल्लक्रीडा शुभावहा ॥ २०३ ॥ अथ दिव्यपरीक्षा ॥ द्विःस्वभावे चरे लग्ने ।
बलिष्ठे ऽब्जे सतारके ॥ जीवे च श्रवणा ज्येष्ठा पुनर्वस्वभिधे शुभे ॥ २०४ ॥ त्यक्त्वा शनैश्चरं
भौमं भूतां १४ च तिथिं सप्तमीम् ८ ॥ भद्रा जन्मर्क्षमासौ च विलग्ने चाष्टमे रविम् ॥ नाडीभं च
यथायोग्यं कुर्य्याद्दिव्यपरीक्षणम् ॥ २०५ ॥ अथ सर्पग्रहणम् ॥ भरण्यार्द्रा मघा- ६२
श्लेषा पूर्वाज्येष्ठाख्य मूलभे ॥ करे ऽहिकेन्द्रगैः पापैर्हित्वा कालमहिग्रहः ॥ २०६ ॥

अथाश्व पशूनां दमनं ॥ कृत्तिका रेवती पुष्ये स्वाती हस्ते श्रवद्वये ॥ मृगेर्कारे विमुक्तत्वंद-
मनं पशुवाजिनाम् ॥ २०७ ॥ अथ सेतुबन्धः ॥ उत्तरे रोहिणी स्वाती मृगेर्के मंगले गुरौ ॥
सेतूनां बन्धनं शस्तं शुभे लग्ने शुभेक्षिते ॥ २०८ ॥ अथ लवण कृत्यम् ॥ लवणारम्भकृ-
त्यन्तु भरणी रोहिणी श्रवे ॥ शनिवारे दिवा श्रेष्ठं जन्म राशेः शनेर्बले ॥ २०९ ॥ अथ जि-
न चार्वाक पाखण्ड क्रिया ॥ उषाश्विन्यां मृगे स्वातौ पुनर्भे श्रवण त्रये ॥ जया पूर्णा तु शु-
क्रेऽब्जे बुधेऽहनि च रोदये ॥ चार्वाक जिन पाखण्ड मण्डली करणं शुभम् ॥ २१० ॥ च शै-
लूष नट कर्म ॥ चित्रार्द्रा रोहिणी पुष्ये उत्तरे श्रवण त्रये ॥ शुभाहेर्के च शैलूष नट कृत्य स-
मीरितम् ॥ २११ ॥ अथ तैलिक यंत्र कृत्यम् ॥ धनिष्ठाश्विकारे चित्रानुराधा पुष्य भे तथा
ज्येष्ठायाञ्च पुनर्वस्वौ रेवत्यां शुभ वासरे ॥ २१२ ॥ अथ कुम्भकार कृत्यम् ॥ पुनर्वसुद्वये
हस्त त्रयेऽन्त्ये रोहिणी मृगे ॥ अनुराधा श्रवो ज्येष्ठे स सूर्ये सौम्य वासरे ॥ तथा च रोदये प्रो-
क्ता कुम्भकार क्रिया बुधैः ॥ २१३ ॥ अथ काष्ठ शिल्प कृत्यम् ॥ हस्त षट्के श्विनी पुष्ये
रेवत्यां श्रवणत्रये ॥ पुनर्भे रोहिणी युग्मे सूत्रधार क्रियोत्तमा ॥ २१४ ॥ अथ स्वर्णकार-

कृत्यम्॥ श्रवत्रये श्विनी पुष्ये मृगे हस्त चतुष्टये ॥ कृत्तिकायां पुनर्वस्वौ शुभे लग्ने तिथावपि॥
हेमकार क्रिया शस्ता हित्वा बुध शनैश्चरौ ॥ २१५ ॥ अथ लोहाश्ममणीनां कृत्यानि ॥ स्वा-
तौ ज्येष्ठाद्वये मूले चित्रार्द्रा भरणी त्रये ॥ मणिलोहाश्मनां कृत्यं पापे चाह्नि स्थिरोदये २१६
अथ नापित कृत्यम् ॥ ज्येष्ठा हस्त त्रये कर्णत्रितये श्वि मृगेंऽत्यभे ॥ पुनर्वसु द्वये हित्वा रि-
क्ता षष्ठाष्टमी तिथिम् ॥ सक्षारे नापितानां चक्षुरादि सकलाः क्रियाः ॥ २१७ ॥ अथाभीर-
जन कृत्यम् ॥ विशाखायां पुनर्भेऽन्त्ये ज्येष्ठा हस्ताश्विनी मृगे ॥ पूर्भाकर्णत्रये पुष्येज्ञेः ते-
र्वै बल्लव क्रिया ॥ २१८ ॥ अथ सौर कृत्यम्॥ विशाखा कृत्तिका पूर्वा मूलार्द्रा भरणी ।
मघे ॥ आश्लेषा ज्येष्ठयोर्मंदे भौमयोः शाकुने बले ॥ २१९ ॥ लग्ने वा दशमे भौमे चौर्यं
सद्द्रव्य लब्धये ॥ २२० ॥ अथ मुहूर्तादौ लग्नादि तिथ्यंतानां बलाबल ज्ञानार्थं गुणाः ॥
सहस्र गुणा भेल्लग्नं चन्द्रः शत गुणो बली ॥ ताराषष्टि गुणो योगो द्वात्रिंशद्गुण भाग्भवे-
त् ॥ २२१ ॥ तदर्द्धं करणं विंद्याद्वारस्त्वष्ट गुणाः स्मृतः ॥ ऋक्षं चतुर्गुणं ज्ञेयं तिथिरेक-
गुणास्मृता ॥ २२२ ॥ इति श्री मद्दैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्त-

गणापतावनेक कार्याणां मुहूर्त्तानां प्रकरणं समाप्तम् ॥ २१ ॥ अथ संक्रान्ति प्रकरणम्॥
संक्रान्तिर्भानुवारेस्या द्धोराख्या भरणी मृगे ॥ पूर्वात्रये च नक्षत्रे शूद्राणां सुखदा स्मृता ॥ १ ॥
सोमवारे भिजित्पुष्या श्विनी हस्ते तथैवच ॥ संक्रान्तिः कथिता ध्वांक्षी विशां सौख्य प्रदायिनी॥
२ ॥ श्रवणादि त्रिभे स्वात्यां पुनर्वस्वौ कुजेहनि ॥ या भवेत्सातु चौराणां सौख्य दात्री महोदरी
॥ ३ ॥ बुधाहे याच रेवत्यां मृगे चित्रानुराधयोः ॥ सातु मन्दाकिनी नाम्ना नृपाणां सौख्य दा-
यिनी ॥ ४ ॥ बृहस्पतौ यदा जाता रोहिण्यां चोत्तरात्रये ॥ तदा मन्दाभिधा ज्ञेया विप्राणां हित-
कारिणी ॥ ५ ॥ भृगोर्वारे विशाखायां कृत्तिकायांच या भवेत् ॥ सातु मिश्रेति विख्याता ।
पशूनां प्रीति दायिनी ॥ ६ ॥ शनौ मूले तथार्द्रायां साश्लेषा ज्येष्ठयोरपि ॥ या भवेद्राक्षसी सा
स्यान्त्यजानां सुखावहा ॥ ७ ॥ आद्येहि त्र्यंशके राज्ञो द्वितीये हन्ति वै द्विजान् ॥ तृतीये
वैश्यकान्प्रान्त्ये संक्रान्तिः शूद्रवर्णकान् ॥ ८ ॥ प्रतिपामं क्रमाद्धात्रौ पिशाचान्राक्षसान्न-
टान् ॥ पशुपाल गणां हन्ति प्रभाते सर्व लिंगिनः ॥ ९ ॥ अथ संक्रांतरम् ॥ वृश्चिके वृष- ६५
७ भे सिंहे कुम्भे विष्णुपदी स्मृता ॥ षडशीति मुखा मीने १२ कन्या ६ मिथुन ३ धन्विषु ॥ १० ॥

प्रोक्तं याम्यायने कर्के मकरे चोत्तरायणम् ॥ विषुवाख्या तुले ७ मेषे १ संक्रान्तिः समुदा-
हृता ॥ २१ ॥ अथ पुण्यसमयः ॥ पुण्याः षोडश नाड्यस्तु परा पूर्वास्तु संक्रमात् ॥ त्रिंश-
त्कर्कटके पूर्वाश्चत्वारिंशत्परा मृगे ॥ २२ ॥ मध्याह्नादुत्तरं पुण्यं प्राङ्निशीथात्तु संक्रमे ॥ निशीथा
त्पूर्वकाले तु मध्याह्नात्प्राक्परेऽहनि ॥ २३ ॥ तन्निशीथे द्व्यहे पुण्यं परपूर्वविभागयोः ॥ २४ ॥
अथायनयोर्विशेषः ॥ अस्तात्पूर्वं तु मकरे रात्रौ संक्रमणं रवेः ॥ तदोत्तरदिने पुण्यं मध्याह्ना-
त्प्राक् प्रकीर्तितम् ॥ २५ ॥ यदा सूर्योदयात्पूर्वं कर्के संक्रमते रविः ॥ तदा पूर्वदिने पुण्यं पर
वच्चेत्परेहनि ॥ २६ ॥ तत्रापि विशेषः ॥ मकरेऽस्तसिता पूर्वं संक्रमे प्राग्घटीत्रयम् ॥ यदा
पूर्वदिने पुण्यं परतश्चेत्परेहनि ॥ २७ ॥ कर्कसंक्रमणं सूर्योदयात्प्राग्घटिकात्रयात् ॥
तदा परदिने पुण्यन्तत्पूर्वं तद्युतिः स्मृता ॥ २८ ॥ आदौ विष्णुपदे याम्ये मध्ये तु विषुवा-
मिषे ॥ षडशीतिमुखे सौम्येयने पुण्यं तदुत्तरम् ॥ २९ ॥ अथ सायनार्कसंक्रान्तिः ॥
सायनस्य रवेर्वापि यदा संक्रमणं भवेत् ॥ तदास्या दधिकं पुण्यं रहस्यं विदुषां हितम् ॥ 
३० ॥ अथ संक्रान्तिमुहूर्तास्तत्फलञ्च ॥ पुनर्वसु विशाखा च रोहिणी चोत्तरात्रयम् ॥

सुभिक्षं तत्र संक्रान्तौ बाणा वेद ५। ६ मुहूर्तकाः ॥ २१ ॥ भरण्यार्द्रा तथा श्लेषा स्वाती
ज्येष्ठा जघन्यभम् ॥ संक्रान्तौ तत्र दुर्भिक्षं मुहूर्ता बाणा भूमिताः १५ ॥ २२ ॥ शेष भानि
समाख्यानि संक्रान्तावर्ध साम्यताम् ॥ मुहूर्त्ता स्त्रिंशदत्रोक्ताः फलं चन्द्रोदयेपि सत् ॥
२३ ॥ अथाब्द विंशोपकाः ॥ अब्द विंशोपकाः कर्क संक्रमोदिङ्मिता रवौ ॥ चन्द्रे नखा-
२० गजा ८ भौमे बुधेऽर्काः १२ शायकाः ५ शनौ ॥ अष्टादश मिताः शुक्रे तत्संख्या ॥-
१८ गुरु वासरे ॥ २४ ॥ अथ संक्रान्तेः स्थित्युपवेशन शायनानि तत्फलञ्च ॥ नेष्टः सुप्तो
रविर्नागे तैतिलेऽथ चतुष्पदे ॥ किंस्तुघ्ने कौलवे तिष्ठन् शकुनौ संक्रमे शुभः ॥ २५ ॥ गरादि
पञ्चके मध्य श्चोपविष्टोऽर्धवर्षणो ॥ २६ ॥ अथ संक्रान्ति वाहनानि ॥ सिंहो व्याघ्रो वरा-
ह श्च खरे भो महिषा ह्वयः ॥ श्वाजौ गौः कुक्कुटो वाहाः संक्रान्तेः क्रमशो रवेः ॥ २७ ॥ अथ
वस्त्राणि ॥ श्वेतं पीतं हरित्पाण्डु रक्तं श्यामञ्च मेचकम् ॥ चित्रं कंबलदिक्स्वेष सन्निभं क्रम
तोंबरम् ॥ २८ ॥ अथ शस्त्राणि ॥ भुशुण्डी च गदा खड्गो दण्डः कोदण्ड तोमरौ ॥ कुन्तः पा-
शोऽङ्कुशोस्त्रं च बाणा स्त्वेवा युधं क्रमात् ॥ २९ ॥ अथ भक्ष्याणि ॥ अन्नञ्च पाय सं भैक्ष्यं ॥-

पक्वान्नंच पयोदधि ॥ चित्रान्नं गुड मध्वाज्यंशर्कराभक्षणं क्रमात् ॥ ३० ॥ अथ विलेपनानि॥
कस्तूरी कुंकुमं चैव चन्दनं मृच्च रोचनम् ॥ यावच्चोतु मदोवापिहरिद्रांजनको ऽगरुः ॥ कर्पूर-
श्चेति विज्ञेयं संक्रान्ते श्च विलेपनम् ॥ ३१ ॥ अथ जातयः ॥ देव भूतोरगाः पक्षी पशुरेणो द्वि-
जः क्रमात् ॥ क्षत्रियो वैश्य शूद्रश्च संकरो जात यस्त्विमाः ॥ ३२ ॥ अथ पुष्पाणि ॥ पुन्नागजाति
वकुल केतकी विल्व कार्कजम् ॥ दूर्वाब्ज मल्लिका पुष्पं पाटलाच जपा क्रमात् ॥ ३३ ॥ अ-
थाभरणानि ॥ नूपुरं किंकिणी मुक्ता विद्रुमं कंकणं मणिः ॥ गुंजावराटका नीलं वज्र भूषं-
यथाक्रमम् ॥ ३४ ॥ अथ वयांसि ॥ बाला कुमारिका रंडा मध्या प्रौढा प्रगल्भिका ॥ वृद्धा वं-
ध्याति वंध्यास्याद सूता योगिनी वयः ॥ ३५ ॥ अथ संक्रान्तेर्वाहनादीनां दुष्ट फलम् ॥ वाह्न-
जात्या सुधाहारा दीनां तद्भुत जीविनाम् ॥ विनाशः स्याच्च संक्रान्तेर्वस्त्रा दीनां महर्घता ॥
३६ ॥ स्थितोपविष्ट सुप्तानां तथा ज्ञेयं विनाशनम् ॥ ३७ ॥ अथ प्रतिमासे संक्रान्तो जन्म- ६८
भस्य पूर्व भव शात्फलम् ॥ संक्रान्ति दिन भात्पूर्व नक्षत्रात्त्रिषु चेत्त्वभम् ॥ मार्गो द्व्यंस्ततः
षट् सु सौख्यं पीडा तत स्त्रिभे १२ । ॥ ३८ ॥ ततो गर्भे सुखं ज्ञेय मर्थद्वा नि स्त्रि भे तथा ॥ २१

योगैः षड्भिः २७ धन प्राप्ति रेवं मास फलं सदा ॥ ३९ ॥ यस्य चेज्जन्म नक्षत्रं शुभवारे भवेच्छुभम्
पापवारे त्व सत्प्रोक्तं मासि मासि फलं त्विदम् ॥ ४० ॥ अथ दुष्ट संक्रान्तौ दानम् ॥ संक्रान्ति
दोष शांत्यर्थं त्रिकोणे त्रि त्रिशूलकम् ॥ तिलेषु संलिखेच्चक्रं प्रदद्यात्स हिरण्यकम् ॥ ४१ ॥
अथाधि मास क्षय मासकौ ॥ असंक्रान्ति रमातीयो मासश्च त्वोधिमासकः ॥ मल मासाह्व-
यो ज्ञेयः प्रायश्चैत्रादिसप्तसु ॥ ४२ ॥ द्वि संक्रांतिक्षयाख्यः स्यात्कदाचित् कार्तिक त्रये ॥ युग्मा-
ख्यः सतु तत्राब्दे ह्यधि मास द्वयं भवेत् ॥ ४३ ॥ मलमासा विति प्रोक्तौ गर्हितौ सर्व कर्मसु ४४
अथ तारादि बला दन्येषां बलं ॥ ताराया बलत श्चान्द्रं बलं सूर्य्यस्य चन्द्रतः ॥ सूर्य्यतः सर्व खेटा-
नां बलं ज्ञेयं शुभाशुभम् ॥ ४५ ॥ इति श्री मद्दैवज्ञ रावल हरिशंकर सूरि कृ० मुहूर्त्त गणा-
पतौ संक्रान्ति प्रकरणं समाप्तम् ॥ १२ ॥ ॥ अथ गोचर प्रकरणम् ॥ तत्रादौ ग्रहाणां
जन्म राशेः सकाशात्प्रत्येकं स्थान फलानि ॥ रामोहा निर्धनं रोगो दैन्यं सौख्यं गतोरुजः ॥
पापं सौख्यं धर्म पीडे फलं भानोः स्वजन्मभात् ॥ १ ॥ पुष्टिर्वित्तं श्रियो रोगः सुखं ला- ६९
५१ भो धनं रुजः ॥ मानं सौख्यं श्रियः पीडा चन्द्रस्यै तत्फलं क्रमात् ॥ २ ॥ भीतिर्हानिः श्रियो वैरं

रुग्लाभौ कार्श्यमेव च ॥ पापं रोगः सुखं शोको भौमस्थे तत्फलं स्मृतम् ॥ ३ ॥ बन्धो लाभो-
भयं वित्तं शोको लक्ष्मीः क्षयो धनम् ॥ रोगो भोगः सुखं बाधा फलञ्चैतद्बुधस्य तु ॥ ४ ॥ श्री-
र्वित्तं रुग्व्ययो लाभः शोकः सौख्यं रुजस्तथा ॥ मानो दैन्यं धनं रोगः फलं चैतद्बृहस्पतेः ॥ ५ ॥
सुखं वित्तं धनं सौख्यं रोगः पीडा विपत्सुखम् ॥ धर्मो दुःखं धनं लाभः फलं शुक्रस्य कीर्तितम् ॥
६ ॥ भीतिः शोकः श्रियो दुःखं हानिः सौख्यं भयं रुजः ॥ पापं शोको धनं कष्टं शनेरेतत्फलं क्र-
मात् ॥ ७ ॥ हानिर्व्ययो धनं वैरं शोको वित्तं विपद्रुजः ॥ पापं वैरं सुखं हानी राहुकेत्वोः फलं ।
क्रमात् ॥ ८ ॥ अथ शुभफलदा ग्रहाः ॥ शुभा एकादशे सर्वे त्रिषट्कदशगो रविः ११।३।
६।१० षट्त्र्यायस्था धरासुत राहुकेतु शनैश्चराः ६।३।११॥ ९॥ दशसप्तत्रिषट्काद्यसंस्थित-
चन्द्रमाः १०।७।३।६।१ शुभः ॥ शुक्लपक्षे तु नवमो द्वितीयः पञ्चमो ९।२।५ पि वा ॥ १० ॥
दिगष्टाश्विचतुःषष्ठो गोचरे शुभदो बुधः १०।८।२।४।६ बृहस्पतिः शुभः प्रोक्तो द्विपञ्चन-
वसप्तगः २।५।९।७ ॥ ११ ॥ एकद्वित्रिचतुःपञ्चनवाष्टव्ययगो भृगुः १।२।३।४।५। ७०
९।८।१२ ॥ १२ ॥ अथ ग्रहाणां क्रमवेधः ॥ अथ रवेः ॥ षष्ठ ६ द्वादश १२ गो विद्धो दशम १०।

स्तुर्य्ये ४ गोग्रहः ॥ तृतीयो ३ नवमः ९ । सूर्य्यो लाभस्थः ११ पंचम ५ स्तथा ॥ १३ ॥ अथ
चन्द्रमसः ॥ द्वितीयः २ सप्तम ७ श्चन्द्रः प्रथमः १ पंचम ५ स्तथा ॥ षष्ठ ६ द्वादश १२ गो विद्धो
ऽष्टमो ८ लाभ ११ संस्थितः ॥ तृतीयो ३ नवम ९ स्तुर्यो ४ दशमस्थानगः १० सदा ॥ १४ ॥
अथ भौम शनि राहु केतूनाम् ॥ तृतीयं ३ द्वादशं १२ षष्ठं ६ नवमो ९ प्यर्थलाभगम् ११ ॥ विध्येत्पंच
मतो ५ भौमं राहुं केतुं शनैश्चरम् ॥ १५ ॥ अथ बुधस्य ॥ द्वितीयं २ पञ्चमं ५ तुर्य्ये ४ तृतीयो ३
नवमो ९ रिपौ ६ ॥ आद्ये १ ष्टमं ८ बुधं खस्थ १० ऽष्टमो ८ न्त्यगा १२ आयगम् ११ ॥ १६ ॥ अथ
गुरोः ॥ द्वितीयं २ गुरु मंत्यस्थः १२ पंचमं ५ तुर्यगो ४ ष्टमः ८ ॥ लाभगं ११ सप्तमं ७ त्रिस्थो ३
नवमं ९ दशमो १० ग्रहः ॥ १७ ॥ अथ भृगोः ॥ भार्गवं वाद्य १ मष्टस्थ ८ स्त्रिग ३ माद्यो १ रि-
गो ६ न्त्यगः १२ ॥ खस्थ १० स्तुर्यं ४ चलाभस्थो ११ नवमं ९ त्रिग ३ आयगम् ११ ॥ १८ ॥ द्विती-
यं २ सप्तमं ७ खेटो नवमः ९ पंचमं ५ तथा ॥ पंचम ५ श्चाष्टमं ८ विध्येत्क्रमवेध उदाहृतः ॥ १९ ॥
अविद्धः शुभदः खेटो न वेधस्तात शुक्रकः ॥ त्रिंश स्थान गतोप्याद्यो विद्ध श्चेत्स विलोमतः ॥ २० ॥ ७१
अथ देश विभागेन जन्मतो वा ग्रहतोयावेधगणना ॥ हिमाद्रि विंध्ययोर्मध्ये खेटर्क्षा द्वेधको-

भवेत् ॥ अन्यत्र जन्म राशेस्तु विज्ञेयौ वेध्य वेधकौ ॥ २१ ॥ अथाष्टकवर्गानुसारेण ग्रह फलम् ॥
स्वाष्टवर्गे यदा खेटो धिकारेखस्तु राशितः ॥ तदा गोचर दुष्टोपि श्रेष्ठो नाल्पक रेखकः ॥ २२ ॥
अथ ग्रहाणां निष्फलत्वम् ॥ सत्फलोपीक्षितः पापैः सौम्यैर्दृष्टोप्य सत्फलः ॥ तावुभौ निष्फलौ
ज्ञेयौ गोचरे जातकेपि च ॥ २३ ॥ शत्रुक्षेत्रगतः खेटो नीचगोप्यस्त गोपि वा ॥ निष्फलः सोपि
विज्ञेयः शत्रुदृष्टोपि तादृशः ॥ २४ ॥ अथ ग्रहाणां राशि भोग मानम् ॥ मासं शुक्रो बुधः सू-
र्य्यः सार्द्धमासं महीसुतः ॥ गुरुरब्दं तमस्सार्द्धं शनिः सार्द्धाब्दिकद्वयम् ॥ सपादद्वि दिनं चन्द्रः
प्रायः खेट भभोगकः ॥ २५ ॥ अथ ग्रहाणां फल समयः ॥ राश्यादौ कुजः सूर्य्यौ मध्ये शुक्र-
बृहस्पती ॥ अन्त्ये चन्द्रः शनिर्ज्ञेयः फलदः सर्वदा बुधः ॥ २६ ॥ सूर्य्यः पञ्च दिनात्पूर्वं शी-
तरश्मिर्घटी त्रयात् ॥ भौमोघस्राष्टकादर्वाक् शुक्रज्ञौ सप्तवासरात् ॥ २७ ॥ गुरुर्मासद्व-
याच्चैव षण्मासात्तु शनैश्चरः ॥ राहुर्मास त्रया देव्य राशेस्तु फलदः स्मृतः ॥ २८ ॥ राशि-
नक्षत्र संधिस्थाः फलदा ध्रुव मेष्ययोः ॥ राशि नक्षत्रयोः खेटाः पूर्वयोश्चेद्विलोमगाः ॥ २९ ॥
अथ जन्मराशितो ग्रहाणां फलम् ॥ ग्रहाणां जन्म भाच्छ्रेष्ठं दशैकादशषट् त्रिगम २० । २१ । ६ । ३ ॥

मध्यमं पञ्च सप्ताश्च नवमस्थान।५।७।२।९।संस्थितम् ॥ ३० ॥ नेष्टमंत्याष्टतुर्यस्थं १२।८
।४ जन्मर्क्षे चेन्मृति भर्वेत् ॥ जपात्सुलक्षणो दानाच्छांते आदर्शनाच्छुभम् ॥ ३१ ॥ अथ विष-
मस्थे ग्रहे विवर्ज्यानि ॥ आदावकालचर्याच दूरदेशागमोन्नृपः ॥ दुष्टवाजि गजारोहो गमनं
पर मन्दिरम् ॥ ३२ ॥ नकार्य्यं साहसं कर्म विषमेषु ग्रहेषु च ॥ ३३ ॥ अथ ग्रहाणां दानानि ॥
ये खेटा गोचरे दुष्टा दशायां स्वाष्टवर्गके ॥ जपदानादिनातेस्युः प्रसन्नाः शान्तितोपिवा ॥ ३४ ॥
माणिक्य धेनु गो धूमा हेम ताम्र गुडों बुजम् ॥ चन्दनं चामरं रक्तं देयं भास्वन्मुदे नृपैः ॥ ३५ ॥
मुक्ता रौप्यं सितं ताम्रं शंखं वंशास्य तंडुलान् ॥ कर्पूरं गोयुगं दद्याद्रत्नं कुंभं विधोर्मुदे ॥ ३६ ॥
प्रवालं हेम गोधूमाच्चक्तं वासो ऽरुणं हयम् ॥ करवीरं गुडं ताम्रं मसूरान् भौम तुष्टये ॥ ३७ ॥
कांस्यं नीलाम्बरं हेम गजदंतं गरुत्मकम् ॥ सुज्ञाज्ञ स्वर्णं का पुष्पं दद्यात्प्रीत्यै बुधस्य च ॥ ३८ ॥
हरिद्राश्वः सिता हेम पीतं धान्यं तथाम्बरम् ॥ लवणं पुष्परागाश्च देयो वाचस्पतेर्मुदे ॥ ३९ ॥
धनुश्चित्राम्बरं चाज्यं श्वेताश्वो हेम तन्दुलाः ॥ सुगन्धी रजतं वज्रं प्रदेयं प्रीतये भृगोः ॥ ४० ॥ ७३
तिल तैलं तथा माषा निंद्रनील सिताम्बरम् ॥ कृष्णां गां महिषीदानं स्वर्णं दद्याच्छनेर्मुदे

॥ ४१ ॥ गोमेदं तुरगं खड्गं नीलवस्त्रञ्च कंबलम् ॥ स्वर्णं तैलं तिलान् दद्यात्सैंहिकेयतुदे-
नय: ॥ ४२ ॥ कस्तूरीं काम्बलं शस्त्रं छागं वैडूर्यकांचनम् ॥ तिलांस्तैलं महीपालैः प्रदेयं केतु-
तुष्टये ॥ ४३ ॥ अथ ग्रह दोषक्षयहर मौषध स्नानं ॥ एलायष्टी मधू शीर ताम्र पुष्पाब्ज कुंकुमैः
स्नानं मनः शिलादेवदारुभी रवितुष्टये ॥ ४४ ॥ पञ्चगव्येन दन्ताम्बु शंख स्फटिक मौक्तिकैः
कुमुदैर्मिश्रितं स्नानं चन्द्रदोषापनुत्तये ॥ ४५ ॥ हिंगूल बिल्व फलिनी मांसी बकुल चन्दनैः॥
रक्त पुष्पैर्बलामिश्रैः स्नानं भौमार्तिनुत्तये ॥ ४६ ॥ गोमयाक्षत मुक्ताभी रोचना मधुहेमभिः
फल मूलैर्युतं स्नानं बोधनार्ति विनाशनम् ॥ ४७ ॥ मालती कुसुमैः श्वेत सर्षप क्षौद्र संयुतैः
पल्लवैर्मदयन्त्या च स्नायाद्गुरु मुदे ततः ॥ ४८ ॥ फला मनः शिला मूल फल कुंकुम वारि-
भिः ॥ स्नानं शुक्रकृतां बाधां नाशयत्येव भूभुजाम् ॥ ४९ ॥ बलांजनैः कृष्ण तिलैर्लो-
ध्रेण मिश्रितै रपि ॥ शतपुष्पान्वितैः स्नायान्मन्द बाधापनुत्तये ॥ ५० ॥ अथ सर्व-
ग्रहाणां दोषापनुत्तये सामान्यमौषधी स्नानम् ॥ लाज कुष्ठ बलामिश्र प्रियंगु घन सर्षपैः
॥ ५१ ॥ देवदारु हरिद्राभिः शुंखालोध्रेण संयुतैः ॥ वारिभिः स्नानमुक्तं हि प्रोक्तं दानपुरः-

मस्म ॥ एतत्सामान्यतः सर्वग्रह पीडोपशांतये ॥ ५२ ॥ यथा सिद्धौषधै रोगान्नश्येयुर्मंत्रतो
भयम् ॥ तथा स्नानविधानेन ग्रह दोषः प्रणश्यति ॥ ५३ ॥ अथ ग्रह प्रीतये रत्नादि धारणम् ॥
शुक्रेन्द्वो रजतं चैव विद्रुमं भानु भौमयोः ॥ ज्ञस्य हेम शनेर्लोहं गुरोर्मुक्ता फलं नरः ॥ ५४ ॥ प्रीत-
ये धारये द्रंगो राजावर्त ततोन्ययोः ॥ ५५ ॥ अथ नवग्रह मुद्रिका ॥ माणिक्यं तरणेर्मध्ये प्राच्यां
वज्रं भृगोर्विधोः ॥ आग्नेय्यां मौक्तिकं याम्यां प्रवालं मंगलस्य च ॥ ५६ ॥ गोमेदं राक्षसे राहोः
पश्चिमं नीलकं शनेः ॥ वायौ वैडूर्यकं केतोरुदीच्यां पुष्पकं गुरोः ॥ ५७ ॥ गारुत्मकं तथै-
शान्यां सोम पुत्रस्य तुष्टये ॥ मुद्रिकायां नरैर्धार्यं ग्रहाणां प्रीतये सदा ॥ ५८ ॥ अथ ग्रह पी-
डोप शमनोपायाः ॥ पालनाद्गुरुवासानां देव ब्राह्मण वन्दनात् ॥ वेदादि श्रवणाद्वापि
साधूनामभि भाषणात् ॥ ५९ ॥ मनः शुद्धेर्जपाद्दानाद्धोमादध्वरदर्शनात् ॥ नो कुर्वंति
ग्रहाः पीडां दुष्ट स्थान स्थिता अपि ॥ ६० ॥ इति श्री मद्दैवज्ञ रावल हरिशंकरस्य गोचर प्र-
करणं समाप्तम् ॥ १३ ॥ ॥ अथ संस्कार प्रकरणम् ॥ तत्रादौ प्रथम रजो दर्शनम् ॥ ७५
८० वैशाखे फाल्गुने माघे मार्गाख्य श्रवणाश्विने ॥ पक्षे शुक्ले शुभाह्वे च सद्दिलग्ने तथा दिवा१

श्रवत्रये ऽनुराधायां रेवती द्वितये मृगे ॥ हस्तत्रये च रोहिण्यां पुष्यभे चोत्तरासु च ॥ २ ॥
सितवस्त्रे शुभं स्त्रीणां प्रथमं पुष्पदर्शनम् ॥ मध्यं ज्येष्ठे पुनर्वस्वौ मूले चान्यत्र निन्दितम् ॥ ३ ॥
अष्टम्यां द्वादशी षष्ठ्यो रिक्ता दर्शोथ संक्रमे ॥ भद्रा नन्दा व्यतीपाते ग्रहणे रजिवैधृतौ ॥ ४ ॥
परतात गृहे सन्ध्या कुदेशे कृष्णवाससि ॥ प्राग्रजोदर्शनं नेष्टं शान्त्या तु शुभदं भवेत् ॥ ५ ॥
प्रागुक्ता विलयं यांति रजोदर्शनसम्भवाः ॥ सर्वे दोषास्तु सल्लग्ने सितेज्ययुतवीक्षिते ॥ ६ ॥
अथ ऋतुमत्याः स्नानम् ॥ पुनर्वसौ तथा चित्रा ज्येष्ठा पुष्याभिधेषु च ॥ स्नायादृतुमती नारी
शुभे वारे शुभे तिथौ ॥ ७ ॥ अथ शीघ्र गर्भधारणम् ॥ रोहिणी द्वितये स्वात्यां हस्तर्क्षे रे-
वती द्वये ॥ स्नाता तु युवती गर्भं विधत्ते शीघ्रमेव हि ॥ ८ ॥ अथ गर्भाधानम् ॥ जन्मर्क्षं
भरणी मूलं दुष्टेन्दुं रेवतीं मघाम् ॥ पर्वाहं च व्यतीपातं वैधृतिं परिघार्धकम् ॥ ९ ॥ पित्रोः
श्राद्धदिनं सन्ध्यां दिवा षष्ठीं च पर्व च ॥ आर्त वाह चतुष्कं च विष्टिरिक्तार्कसंक्रमान् १०
तथैव क्रूरवारांश्च गर्भाधाने विवर्जयेत् ॥ स्वातौ हस्ते ऽनुराधायां रोहिण्यां वा श्रवत्रये ॥ ७६
११ ॥ त्र्युत्तरे मृगशीर्षे च शुभाहे समरात्रिषु ॥ गर्भाधानं प्रशस्तं स्याच्छस्ते चन्द्रे युगा-

शके ॥ २२ ॥ केन्द्रकोणस्थिते सौम्ये पापे च त्रिषडायगे ॥ पुंलग्ने पुन्नवांशे च तथा शु-
ग्रह वीक्षिते ॥ २३ ॥ चित्रा पुनर्वसौ पुष्ये अश्विन्यां मध्यमं स्मृतम् ॥ २४ ॥ अथ पुंसव-
सीमन्तोन्नयने ॥ द्वितीये वा तृतीये वा मासि पुंसवनं स्मृतम् ॥ मासे षष्ठेऽष्टमे वाथ गर्भे
सीमन्तकं विदुः ॥ २५ ॥ पुनर्वसु द्वये मूल श्रवणे मृग हस्तयोः ॥ गुरु भौमार्क वारेषु प्रो-
क्तं पुंसवनादिकम् ॥ २६ ॥ रेवत्यां त्र्युत्तरे पुष्ये शुक्रे चन्द्रे बुधे जयः ॥ मासेशे बलिचन्द्रे
लग्ने पुंभांशके शुभे ॥ सौम्य केन्द्रे त्रिकोणस्थे पाप लाभ त्रिषड्गगे ॥ २७ ॥ अथ मासेश्वरा-
मासाधिपा शुक्र भौमौ गुरुः सूर्येन्दु सूर्यजाः ॥ बुधो लग्न पतिश्चन्द्रः सूर्यश्चेते यथाक्र-
मम् ॥ २८ ॥ अथ गर्भ संस्कारे विशेषः ॥ विवाहे गर्भ संस्कारे चन्द्र शुद्धिः स्त्रिया अपि ॥
भूषाम्बरादि कार्येषु भर्तुश्चैवैन्दवं बलम् ॥ २९ ॥ गर्भाधानादि संस्कारे तथान्नप्राशने
शिशोः ॥ न तत्र गुरु शुक्रास्त मलमासादि दूषणम् ॥ ३० ॥ अथ विष्णु पूजा ॥ सी-
मन्तोर्ध्वं सिते पक्षे रोहिण्यां श्रवणे तथा ॥ द्वादशी सप्तमी युग्मे हर्यर्चा गर्भ तुष्टये ॥ ३१ ॥ ७७
८८ अथ सूतिका गृह प्रवेशः ॥ श्रवणयोत्तरा हस्त त्रये पुष्यानुराधयोः ॥ पुनर्भे रोहिणी-

मूलैरेवती द्वितये तथा ॥ २२ ॥ शुभाहे प्रसवे युक्ता सूतिका मन्दिरं विशेत् ॥ २३ ॥ अथ जात कर्म ॥ जात कर्म शिशो जाते पिता तत्काल माचरेत् ॥ एकादशेऽह्नि वा कुर्याद्द्वादशे वा यथा विधि ॥ २४ ॥ रेवती द्वितये पुष्ये पुनर्वस्वनुराधयोः ॥ श्रवणादि त्रिभे हस्त त्रितये रोहिणी मृगे ॥ २५ ॥ अनुत्तरं जात कर्माद्यं कालाति क्रमणो विदुः ॥ २६ ॥ अथ जन्म समये दुष्ट काल निर्णयः ॥ तत्राऽभुक्त मूलम् ॥ ज्येष्ठान्त्ये घटिका युग्मं मूला दौ घटिका द्वयम् ॥ अभुक्त मूल मेतत्स्यादित्येवं नारदो ब्रवीत् ॥ २७ ॥ वशिष्ठस्तु तयोरन्त्याद्ययोरेक द्विनाडिकम् ॥ अंगिरा घटिकामेका मन्येषट् चाष्ट तत्रतु ॥ जातं शिशुं त्यजेत्तातो न पश्ये द्वाष्ट हायनम् ॥ २८ ॥ अथ मूल जनने पाद मूलम् ॥ मूलाद्य चरणे तातो द्वितीये जननी तथा ॥ तृतीये तु धनं नश्ये च्चतुर्थोऽपि शुभावहः ॥ २९ ॥ अथ मूले वासः ॥ माघ षाढाश्विनो भाद्रपदे मूलं वसेद्दिवि ॥ कार्तिके श्रावणे चैत्रे पौष मासेतु भूतले ॥ ३० ॥ वैशाखे फाल्गुने ज्येष्ठे मार्गे पाताल वर्तितत् ॥ भूतले वर्तमाने तु ज्ञेयो दोषोऽन्यथा नहि ॥ ३१ ॥ अथाश्लेषा ज्येष्ठा गंडान्त यमल जननादौ नेष्ट फलम् ॥ यदुक्तम्

लपादेषु फलं तत्स्याद्विलोमकम् ॥ आश्लेषायांतु विज्ञेयं शान्तिस्तस्माद्विधीयते ॥ ३२ ॥
गराडान्तत्रितये चापि ज्येष्ठायाम शुभा जनिः ॥ तथा यमल जन्मादि विकृतिर्न शुभावहा
॥ ३३ ॥ अथ ज्येष्ठायाञ्चरणा फलम् ॥ आद्ये पादेऽग्रजं हन्ति ज्येष्ठाया मनुजं द्विके ॥ तृती
ये जननीं जातः स्वात्मानं चतुराय के ॥ ३४ ॥ अथ पूर्वोक्ता अन्येच जनने दुष्ट काला: ॥
शांत्या शुभावहास्ता नाह ॥ गंडांतः परिघः शूलं व्यतीपातोथ वैधृतिः ॥ मूला श्लेषाथ्यमा
ज्येष्ठा यमघंटोर्क संक्रमः ॥ ३५ ॥ वज्रगंडो स्तृतिर्भद्रा व्याघातो दग्ध वासराः ॥ कृष्णा
चतुर्दशी पातस्तात सोदर जन्मभे ॥ ३६ ॥ तथाऽवम दिनं निंद्यं जन्म काले शिशो स्त्विकम
तद्दोष परिहाराय शान्तिं कुर्याद्यथा विधि ॥ ३७ ॥ अथ त्रिकदोष: ॥ यदि पुत्र त्रया दू
र्ध्वं चतुर्थी कन्यका भवेत् ॥ एवं कन्यात्रयात्पुत्र स्तदा दोष स्त्रिकाभिधः ॥ ३८ ॥ अथ स्तन्य
पानम् ॥ जात कर्मोक्त नक्षत्रे श्रवणे च पुनर्वसौ ॥ त्यक्त्वा स्वातीं स्तन्य पानं शुभं प्रोक्तं
शुभेऽहनि ॥ ३९ ॥ अथ सूतिका क्वाथः ॥ भैषज्य गदिते धिस्ने वारे दुर्योग वर्जिते ॥
आरोग्य हेतवे क्वाथः सूतिकायाश्च तच्छिशोः ॥ ४० ॥ अथ सूतिका पथ्यम् ॥ अन्नाप्रा- 

नोक्तनक्षत्रे शुभाहे सांशु मालिनि ॥ हित्वा रिक्तां चतुर्योगं सूतिका पथ्यमीरितम् ॥ ४१ ॥
अथ पञ्चमी षष्ठी पूजा ॥ जन्मतः पञ्चमे षष्ठे जीवंत्याः पूजनं निशि ॥ षष्ठेऽह्नि षष्ठिका पूज्या गीतैर्जागरणादिभिः ॥ ४२ ॥ अथ सूतिका स्नानम् ॥ हस्ते मृगे नुराधायां रोहिण्यां रेवतीद्वये ॥ उत्तरात्रितये स्वातौ जीवार्ककुजवासरे ॥ ४३ ॥ सूती स्नानं प्रशस्तं स्याद्धित्वा यार्द्रात्रयं श्रवम् ॥ विशाखा भरणी मूलं चित्राख्यं कृत्तिकां मघाम् ॥ रिक्तां बुध शनी षष्ठीं द्वादशीमष्टमीं तथा ॥ ४४ ॥ अथ प्रसंगात्सर्वेषां नित्य स्नानम् ॥ पुत्र जन्मनि संक्रान्तौ सिद्धजन्मदिने तथा ॥ नित्यस्नाने च कर्तव्ये तिथि दोषो न विद्यते ॥ ४५ ॥ अथ प्रसंगात्स्त्रीणां शतभिषा स्नानं निषिद्धम् ॥ श्रीपति निबन्धे ॥ स्नानं कुर्यान्नतु या नारी चन्द्रे शतभिषां गते ॥ सप्तजन्म भवेद्वंध्या विधवा दुर्भगा ध्रुवम् ॥ ४६ ॥ यदा शतभिषा स्नानं नारीणां यदि जायते ॥ पूजयेत्त्वाश्विनं तत्र ह्यात्मनः सर्व सत्कृतम् ॥ ४७ ॥ अथार्भकस्य दन्तोत्पत्तेः फलम् ॥ स्वात्मानं प्रथमे मासि द्वितीये चानुजं त्तथा ॥ तृतीये भगिनीं तुर्ये मातरं पञ्चमे ग्रजान् ॥ ४८ ॥ निहन्त्याद्दशनोत्पत्तौ सदंतस्त्वर्भको खिलान् ॥ षष्ठे दोलभते भोगानर्धपंक्तावसत्सदा ॥ ४९ ॥

अथ जलपूजा ॥ पुनर्वसुद्वये हस्तेऽश्वगे मूलानुराधयोः ॥ श्रवे गुरौ बुधे चन्द्रे सत्तिथौ जलपूज-
नम् ॥ ५० ॥ गुरौ शुक्रेऽस्तगे चैत्रे पौषे वा मलमासके ॥ मासपूर्त्तौ विवाहादौ न कुर्यात्तु जलार्च-
नम् ॥ ५१ ॥ अथ दोलारोहणम् ॥ स्तन्यपानोक्तनक्षत्रे कुर्य्याद्दोलाधिरोहणम् ॥ धृत्य १८
कं १२ नृप १६ दि १० दंत ३२ वासरे जन्मतः शिशोः ॥ ५२ ॥ रविभात्पञ्चमे ५ सौख्यं ततः
पञ्चदश २० स्वपि ॥ अशुभं च ततः शेषे २७ शुभं दोलाधिरोहणम् ॥ ५३ ॥ अथ खट्वारोहणम्
दोलोक्तभे सुपर्य्यंकं जननी वासुवासिनी ॥ योगशायि हरिं ध्यात्वा स्वापयेत्प्राक्शिरः शिशुम्
॥ ५४ ॥ अथार्भकस्य दुग्धपानम् ॥ एकत्रिंशतमे घस्रे ऋक्षे चान्नाशनोदिते ॥ पूर्वाह्णे च शु-
भे वारे पयःपानं शिशोः स्मृतम् ॥ ५५ ॥ अथ निष्क्रमणम् ॥ तुर्य्ये निष्क्रमणं मासि या-
त्रोक्तदिवसे स्मृतम् ॥ जन्मतो द्वादशाहे वा कुर्य्यान्मंगलपूर्वकम् ॥ ५६ ॥ अथ कच्छाबन्धनं
गणाकमण्डने ॥ कच्छाबन्धः सितपक्षे सुदिने करपञ्चके ॥ ध्रुवर्क्षेऽदिति युग्मेऽश्विपित्र्-
पौष्णेन्दु वासरे ॥ ५७ ॥ अथ कटिसूत्रं भूम्युपवेशनम् ॥ पुष्य हस्ताश्विनी मूले ह्युत्तरे ८१
रोहिणी मृगे ॥ ज्येष्ठायामनुराधायां शुभाहे मासि पञ्चमे ॥ ५८ ॥ कुजे शुद्धे समभ्यर्च्य

वाराहं धरणी शुचि ॥ कटिसूत्र समेर्वध्वा बालकं चोपवेशयेत् ॥ ५९ ॥ पुस्तकं लेखनीं
शस्त्रं रौप्यंच कांचनं तथा ॥ तस्मिन्काले यदा दत्ते तद्वृत्या जीवनं शिशोः ॥ ६० ॥ अथा-
ऽन्न प्राशनम् ॥ रेवती द्वितये पुष्ये पुनर्वस्वनुराधयोः ॥ श्रवणादि त्रये हस्त त्रितये रोहि-
णी मृगे ॥ ६१ ॥ उत्तरायां शुभे लग्ने मीन मेषालि मिन्नगे ॥ षष्ठान्मासि समे पुंसः पञ्च-
मादिषमे स्त्रियः ॥ ६२ ॥ अन्न प्राशनकं प्रोक्तं शुभाहे सर्व संमतम् ॥ नेत्ये के शत भे स्वा-
ती चानुराधा स्व्य जन्म भे ॥ ६३ ॥ अथ ताम्बूल भक्षणम् ॥ अनुराधा त्रये हस्त त्रितये ।
रेवती द्वये ॥ उत्तरा सुच रोहिण्यां श्रवणा द्वितये मृगे ॥ ६४ ॥ पुनर्वसौ तथा पुष्ये शनि
भौमान्य वासरे ॥ ताम्बूल भक्षणं सार्द्ध द्वि मासेन्नाशनेथवा ॥ ज्ञार्कीज्यान्य द्वये लग्ने ।
कार्य्यं ताम्बूल भक्षणम् ॥ ६५ ॥ अथ कर्ण वेधः ॥ रेवती द्वितये पुष्ये पुनर्वस्वनुराध-
योः ॥ श्रवणा द्वितये चित्रा मृगे हस्ते शुभे तिथौ ॥ ६६ ॥ शुभे वारेहि जन्माहा द्वादशे ।
षोडशे दिने ॥ कर्णवेधोथ वा मास षष्ठे सप्ताष्टमे पिवा ॥ ६७ ॥ युग्माब्दं जन्म मासं च पौ-
षं चैत्रं हरेः शयम ॥ जन्म तारां विहायाथ ह्युत्तरे पिच केचन ॥ ६८ ॥ अथ कन्या याना-

 सिकावेधः ॥ कर्णावेधोक्तभे शस्तं कन्याया घ्राण वेधनम् ॥ उत्तरा जलपक्षातौ पूर्वा-
 ह्ने शुक्लपक्षके ॥ ६९ ॥ अथाऽब्दपूर्तिः ॥ प्रतिवर्षन्तु जन्माहे समायारतप पूर्वकम् ॥ ग-
णेशं वा समभ्यर्च्य देवताश्चिरजीविनः ॥ ७० ॥ छायां सुर्व्यं च विध्युक्तं कर्म दातान्यनेक-
शः ॥ बध्वा मंगलसूत्रं च भुक्ते शिष्टैर्द्विजैः सह ॥ ७१ ॥ जन्माह्ने जन्मनक्षत्रे नोचेन्मन्दार-
योस्तदा ॥ तस्मिन्वर्षे महत्कष्टं कार्य्यहानिः पदे पदे ॥ ७२ ॥ अथ चूडाकर्म ॥ जलाशयसु-
राराम प्रतिष्ठा व्रतबंधनम् ॥ अग्न्याधानं विवाहं च चौलं राज्याभिषेचनम् ॥ ७३ ॥ नव-
गेह प्रवेशादीन् न कुर्य्याद्दक्षिणायने ॥ गुरुभार्गवयोरिक्ते बाल्यवार्धकयोरपि ॥ ७४ ॥
दशाहं पश्चिमे बाल्यं पंचाहं वार्धकं भृगोः ॥ प्राच्यान्तु त्रिदिनं बाल्यं पक्षं वार्धकमुच्यते
॥ ७५ ॥ पक्षं बाल्यं च वार्धक्यं गुरोस्त्याज्यं शुभे सदा ॥ दशाहं बालवार्धक्ये परे सप्ताह-
मूचिरे ॥ ७६ ॥ त्र्यहं चावश्यके काल्ये केचिद्भार्गवजीवयोः ॥ अर्धाहं बाल्यमन्यस्य वा-
र्धकं त्रिदिनं विदुः ॥ ७७ ॥ अवन्ति देशे सप्ताहं षडङ्गे दश विंध्यके ॥ पञ्च हूणो द्वयो- 
रेते शेषे देशे दिन त्रयम् ॥ ७८ ॥ अथ शुक्रोदयास्तमानम् ॥ नेत्रेषु दक्षिणे तैश्चैव हस्यो

भवति भार्गवः ॥ वसुशैलमिते स्तत्र यातोऽस्तं नैव दृश्यते ॥ ७९ ॥ खबाणाश्वि २५०
मितान् घस्रान्प्रतीच्यां दृश्यते भृगुः ॥ तत्रैवार्ककरग्रस्तो नवा ९ हानिर्न दृश्यते ॥ ८० ॥
अथ गुरूदयास्तमानम् ॥ प्रायो वाचस्पतिर्मासं भवत्यस्तगतः गोचरः ॥ प्राच्यामुदयते
मासं याति पश्चात्तु वत्सरात् ॥ ८१ ॥ चौलं संवत्सरे पूर्णो त्रितये विषमे चरेत् ॥ सौम्यायने
विचैत्रे च शेज्य शुक्रेन्दुवासरे ८२ चरक्षिप्रेन्दु चित्रेन्द्रपौष्णो च शुभवासरे ॥ अथवा ब्राह्मणा
स्यार्के क्षत्रियस्य कुजेऽहनि ॥ ८३ ॥ मंदाह्वे वैश्य शूद्राणां क्षौरोक्त तिथि भादिषु ॥ लग्ने
खेटबलोपेते चन्द्रतारा बलान्विते ॥ ८४ ॥ ज्येष्ठस्य ज्येष्ठे नो मासे मार्गशीर्षेपि केचन ॥
मातुर्गर्भेन सचौलं पञ्च मासाधिके शिशोः ॥ ८५ ॥ पञ्च वर्षाधिकस्येष्टं गर्भिण्यामपि
मातरि ॥ ८६ ॥ अथाक्षर लेखनारम्भः ॥ सौम्यायने शुभे मासि स्वाध्याय दिवसे शुभे ॥ स्व-
स्थे जीव बुधे शुक्रे लग्ने खेट बलान्विते ॥ ८७ ॥ रेवती द्वितये पुष्ये पुनर्वस्वनुराधयोः ॥
आर्द्राश्विन्यो श्रवणे हस्ते स्वातौ चित्राभिधे तथा ॥ ८८ ॥ हेरंबं विष्णु वाग्देवीं तयाभ्यर्च्येष्ट दे- ८४
वताः ॥ पञ्चमाब्देनरः कुर्यालिप्यारम्भं सदाबुधः ॥ ८९ ॥ अथोपनयनम् ॥ व्रतबन्धस्तु

विप्राणां गर्भाद्वा जन्मतोऽष्टमे ॥ षष्ठेऽब्दे सप्तमे मध्यो विद्याकामस्य पञ्चमे ॥ ९० ॥ षष्ठे-
चैकादशेऽब्देवा क्षत्रियाणां समुदीरितः ॥ वैश्यानां द्वादशेऽब्दे स्याद्‌ष्टमे गर्भतो पिवा ॥ ९१ ॥
विप्रस्या षोडशाद्वर्षादा द्वाविंशात्तु भूभुजाम् ॥ वैश्यानामा चतुर्विंशाद्गौणः कालउदाहृ-
तः ॥ ९२ ॥ निजवर्णेशेश स्वेश भास्वद्वागीश्वरेन्दुषु ॥ वीर्यवत्सु द्विजातीनां व्रतबन्धः शु-
भप्रदः ॥ ९३ ॥ अथ वर्णेशाः ॥ जीवशुक्रौ तु विप्रेशौ भूभुजां रविमंगलौ ॥ विशोऽब्जोज्ञश्च
शूद्राणां मंत्यजानां पतिः शनिः ॥ ९४ ॥ अथ वेदाधीशाः ॥ ऋग्वेदेशो गुरुः प्रोक्तो यजुषां
भार्गवः पतिः ॥ सामवेदेश्वरो भौमः पतिश्चाथर्वणो बुधः ॥ ९५ ॥ अथ गुर्वादि बलम् ॥
गुरुसूर्य्यबलं ज्ञेयं विवाहे यद्विवक्ष्यते ॥ चन्द्रतारा बलं पूर्वमुक्तं ग्राह्यं वटोः शुभम् ॥ ९६ ॥
अथ मासादि ॥ माघात्पञ्चसु मासेषु शुक्ले जीवज्ञ भास्करे ॥ केचित्तु कृष्णपक्षेपि प्रथम-
त्रिदले जगुः ॥ ९७ ॥ जन्तुर्मासभलग्नादौ विप्राणां व्रतबंधनम् ॥ वहु विद्याप्रदं विद्यादा-
द्यगर्भेषु वासपि ॥ ९८ ॥ अथ तिथयः ॥ द्वि २ त्र्ये ३ कादश ११ दि १० क्पंच ५ द्वादश १२ प्रमि-
ते तिथौ ॥ शुक्लपक्षे तथा कृष्णे पञ्चमी द्वित्रिके ५ । २ । ३ । शुभम् ॥ ९९ ॥ अथोक्तमानि-

नक्षत्राणि ॥ हस्तत्रये मृगे पुष्ये श्रवणद्वितयेऽश्विभे ॥ रेवत्यांच प्रशस्तं स्यान्मेखला-
बंधनंवटोः ॥ २०० ॥ अथ मध्यमानि ॥ घस्रयर्क्षेन्दुकुजे मूले पूर्वाश्लेषयोत्तराशते ॥ पुनर्वस्व-
नुराधार्द्रारोहिण्यां केचिदिष्यते ॥ २०१ ॥ अथ प्रतिवेद नक्षत्राणि ॥ आर्द्राहस्त त्रयेमूले
पूर्वाश्लेषाश्रवे तथा ॥ ऋग्वेदाध्यायिनां जीवे प्रशस्तं व्रत बन्धनम् ॥ २०२ ॥ उत्तरे रेवती-
पुष्ये पुनर्वस्वनुराधयोः ॥ मृगे हस्ते च रोहिण्यां भार्गवे यजुषां व्रतम् ॥ २०३ ॥ अश्विन्यां
श्रवणे पुष्ये धनिष्ठाद्र्युत्तरात्रये ॥ हस्ते भूमिसुते श्रेष्ठे सामगानां व्रतं तथा ॥ २०४ ॥ मृगे-
हस्तेश्विनी पुष्ये धनिष्ठा रेवती श्रवे ॥ पुनर्वस्वनुराधायां बुधे शस्तमथर्वणाम् ॥ २०५ ॥
अथ साधारण नक्षत्रे विशेषः ॥ पुनर्वसौ व्रतं श्रेष्ठं शतभे चेति केचन ॥ २०६ ॥ अथ
व्रते निषिद्धानि ॥ कृष्णपक्षे शनौ रात्रौ प्रदोषे वागलग्रहे ॥ अनध्याये पराह्णे चन कु-
र्याद्व्रत बन्धनम् ॥ २०७ ॥ अथानध्यायाः ॥ संक्रान्ति युग मन्वादि द्वितीया ज्येष्ठ-
शुक्लजा ॥ चैत्र कृष्ण तृतीया च द्वादशी माघ शुक्लजा ॥ २०८ ॥ प्रति पक्षेष्टमी चैव ८६
१४ चतुर्दश्यादिनत्रयम् ॥ रिक्ता च व्रतबंधादावष्टौ वर्ज्यागलग्रहाः ॥ २०९ ॥ अथात्र-

लग्नबलम् ॥ त्रिषट् ३।६ संस्थाः खलाः सर्वे चन्द्रो द्विद्यून दिक् त्रिगाः २।७।१०।३ सौ-
म्याः केन्द्र त्रिकोणस्था १।४।७।१०।९।५। लाभे ११ सर्वे व्रते शुभाः ॥ ११० ॥ जीवेन्दु-
भृगुलग्नेशा व्रतेनेष्टाः षडष्टगाः ६।८ ॥ शुक्रेन्दू व्यय १२ गौ निष्टौ खला लग्नाष्टपंच-
गाः १।८।५।१०।३ ॥ १११ ॥ व्रते सौम्याः शुभाः प्रोक्ताः षडष्टांत्य ६।८।१२ विवर्जिताः
शुक्रे स्वर्क्षोच्चगश्चन्द्रो लग्ने १ श्रेष्ठो रविः क्वचित् ॥ ११२ ॥ ज्ञेज्य शुक्रांशगो लग्ने चन्द्रः
शस्तो व्रते मतः ॥ नान्यत्राथ निजांशेऽब्जः पुनर्वसु श्रवे शुभः ॥ ११३ ॥ अथ केन्द्रस्य खेट-
स्य फलम् ॥ भूपसेवी वणिग्वृत्तिः शस्त्र भृत्याढ्यकोत्तमः ॥ पण्डितश्चार्थवान्म्लेच्छो
विकेन्द्रे त्वर्कतः क्रमात् ॥११४ ॥ लग्ने शुक्रर्भगुः कोणे शुक्रांशेऽब्जः शुभो व्रते ॥ गुरुश्चन्द्रो
भृगुर्नेष्टो रवि भौमार्कि संयुतः ॥ ११५ ॥ अथ चैत्र प्राशस्त्यम् ॥ चैत्रमासि रवौ मीने विबले-
पि गुरौ वटोः ॥ व्रतबन्धः प्रशस्तस्स्याच्चैत्रे मीने यतः शुभः ॥ ११६ ॥ अथात्र मातृरजो दोषे वि-
शेषः ॥ चौलोक्त समये कार्य्यं केशांतं षोडशेऽब्दके ॥ व्रतबंधोक्त कालेतु समावर्तनमीरितम् ८७
॥११७ ॥ अथ केशांत समावर्तनम् ॥ मातृरजस्वलादोषे नांदीश्राद्धोत्तरं तदा ॥ आवश्यके व्रतंचौ-

लं शान्तिं कुर्याद्व्रते गृही ॥ ११८ ॥ अथ राज्ञां छुरिकाबन्धनम् ॥ व्रतोक्तमासतिथ्यादौ
विचैत्रे सबले कुजे ॥ विभौमे छुरिकाबन्धः प्राग्विवाहान्महीभुजाम् ॥ ११९ ॥ इतिश्रीमद्दैवज्ञ
रावल हरिशंकर॰ संस्कार प्रकरणं समाप्तम् ॥ १४ ॥ ॥ योषा धर्मार्थकामानां साध्वी चे-
त्साधनं भवेत् ॥ शीलं लग्नवशात्तस्याः शुभं लग्नमतो ब्रुवे ॥ १ ॥ दैवज्ञं सुदिनेभ्यर्च्य ताम्बू-
लश्रीफलादिभिः ॥ विज्ञाप्य भंतयोर्वक्ष्ये विवाहं वरकन्ययोः ॥ २ ॥ प्रश्नलग्नाद्दि १० गीशा
११ सिनि ३ बाण ५ शैल ७ स्थिते विधौ ॥ सद्यः परिणयो जीवदृष्टे स्याद्वरकन्ययोः ॥ ३ ॥
गो २ तुला ७ कर्क ४ लग्ने वा शुभेक्षितयुते तथा ॥ विषमर्क्षे स्थितौ शुक्रचन्द्रौ चेत्प्रश्न तल्ल-
नुम् ॥ ४ ॥ वरदौ तत्र पत्नीदौ समभांशगतौ तदा ॥ चन्द्रः षष्ठेष्टमे पक्षे ६ । ८ बहुले सम राशि-
गः ॥ ५ ॥ क्रूरेक्षितो विवाहस्य भंगदः परिकीर्तितः ॥ द्यूने ७ सेंदु भृगौ रंडा भौमे विकुलटा
शनौ ॥ ६ ॥ सुशीला सुभगा जीवे बुधे च प्रश्नलग्नतः ॥ ७ ॥ याहक्सन्तान संयुक्ता यो-
षित्तापि समा व्रजेत् ॥ तां विलोक्य तथापत्यं तस्याः प्रश्नं वदेत्सुधीः ॥ ८ ॥ शंखभेर्या- 
दिनादश्चेत्प्रश्ने स्यान्मंगलं तदा ॥ वायसश्व शृगालानां नादश्चेत्त्व शुभं चरेत् ॥ ९ ॥ दंप-

त्योरंतरा मैत्री विवाहोन शुभावहः ॥ सत्यां मैत्र्यां शुभस्तेन ब्रुवे मैत्रीरनेकधा ॥ १० ॥
घटितं प्रथमं ज्ञात्वा शुभदं वरकन्ययोः ॥ उद्वाहस्तु विधातव्यस्तेनादौ वच्मितेतथा ११
युंजी १ वर्ग २ स्तथा वर्गा ३ वश्यं ४ तारा ५ थ योनिजा ६ ॥ ग्रहमैत्री ७ गणो ८ राशेर्भं ९
नाडी १० हीतिवैदश ॥ १२ ॥ अथोत्तरा बलाश्चेति विज्ञेयस्तु परस्परम् ॥ गुणाधिके स-
मुद्वाहः कर्त्तव्योवर कन्ययोः ॥ १३ ॥ अथ युंजी प्रीतिः ॥ पूर्व भागस्तु रेवत्याः षड्भेचा-
र्द्रादितस्तथा ॥ द्वादश स्वपि मध्योयं ज्येष्ठांतो नवकें ऽत्यकः ॥ १४ ॥ प्राग्भागे जन्म भंत-
स्याः कन्याया वल्लभः पतिः ॥ नृणां म पर भागेतु कन्याया वल्लभः पतिः ॥ १५ ॥
मध्ये भागेतु दंपत्योः प्रीतिरुक्ता परस्परम् ॥ १६ ॥ अथ वर्ग प्रीतिः ॥ अवर्गो गरुडः
प्रोक्तो मार्जारस्तु कवर्गकः ॥ चवर्गः केशरी ज्ञेयो टवर्गः श्वा प्रकीर्त्तितः ॥ १७ ॥ तवर्गः
सर्प संज्ञः स्यात्पवर्गो मूषको मतः ॥ यवर्गो हरिणाख्यश्च शवर्गो मेष उच्यते ॥ १८ ॥गरु
डोरगयोर्वैरं मिथ आखु विडालयोः ॥ शार्दूल मृगयोर्वैरं तथा मेष शुनोरपि ॥ १९ ॥ वर्गो-
ऽरित्वे महद्दुःखं वर्गैक्ये प्रीतिरुत्तमा ॥ कन्यका वरयोश्चैव स्वामि सेवकयोरपि ॥ २० ॥

अथ वर्णप्रीतिः ॥ कर्क वृश्चिक मीनाख्या ब्राह्मणा अथ बाहुजाः ॥ मेष सिंह धनुष्काख्या
वृष कन्या मृगा विशः ॥ २१ ॥ तुला द्वंद्व घटाः शूद्राश्चैते वर्णा श्च राशिजाः ॥ वर्णाधिक्ये
वरः श्रेष्ठो न कन्या वर्णतोधिका ॥ २२ ॥ अथ वश्या वश्यम् ॥ युग्मं कुम्भस्तुला कन्या प्रा
ग्दलं धनुषो द्विपात् ॥ परार्धं धनुषश्चैव पूर्वार्धं मकरस्यच ॥ २३ ॥ केशरी वृषभाख्य श्च मेष
श्चैते चतुष्पदाः ॥ नक्रोत्तर दलं मीनो जल चारी प्रकीर्त्तितः ॥ २४ ॥ कर्कः कीटक संज्ञश्च वृ-
श्चिकस्तु सरीसृपः ॥ द्विपदानां वशाः सर्वे हित्वा केशरिणं तथा ॥ २५ ॥ भक्ष्या वारिचरास्ते
षां भयस्थानेतु वृश्चिकाः ॥ लोकाद्विज्ञेय मानन्तु सिंह वश्यादि वृश्चिकः ॥ २६ ॥ अथ तारा
मैत्री ॥ कन्या भं वर भाद्गण्यं वधू भाद्वर भं तथा ॥ नव हृच्छेष भे नेष्टे सप्त पंच त्रि संख्यके-
॥ २७ ॥ अथ योनि मैत्री ॥ अश्विन्याः शत भस्या श्वो महिषः स्वाति हस्तयोः ॥ पूभाध-
निष्ठयोः सिंहो भरण्यंत्य भयोर्गजः ॥ २८ ॥ कृत्तिका पुष्ययोर्मेषः श्रुति पूषाढयोः कपिः
उषाभिजिन्नयोर्बभ्रू रोहिणी मृगयोरहिः ॥ २९ ॥ ज्येष्ठानुराधयोरेणः श्वा मूलार्द्र भयो- ९०
१· स्तथा ॥ पुनर्वश्लेषयोरोतु राखुः पूभा मघर्क्षयोः ॥ ३० ॥ विशाखा चित्रयोर्व्याघ्रो गो-

मु·ग· रूफोत्तर भाद्रयोः॥ मैत्रीवैरं विचार्य्यैवं भानांप्रोक्तास्तुयोनयः॥ ३१॥ अथ परस्पर महद्वैरं
९२ गो व्याघ्रं महिया श्वं च श्वैरा मार्जार मूषकम्॥ सिंहे मं कपि मेषं च वैरं तुन कुलो रगम्॥
३२॥ त्याज्यं परस्परं चैतद्दंपत्योः स्वामि भृत्ययोः॥ ३३॥ अथ ग्रह मैत्री॥ मित्रारिरा
कुज चन्द्रेज्याः शत्रू शनि सितौ रवेः॥ मित्रे सूर्य बुधावेतौ रिपुः कोपिन्न शीतगोः॥ ३४॥
जीविन्दु सूर्य्या भौमस्य मित्रारिरा बोधनो रिपुः॥ सूर्य्य शुक्रौ हितौ शत्रुश्चन्द्रमा बोधनस्यतु
॥ ३५॥ मित्रारिरा सूर्य्य भौमाब्जा विच्छु क्रौत्वहितौ गुरोः॥ मित्रे सौम्यं शनी शत्रु भार्गवस्ये
न्दु भास्करौ॥ ३६॥ सुहृदौ वित्सितौ सौरेः शत्रवोर्क कुजेन्दवः॥ सर्वेषा मेव खेटाना
मनुक्तास्ते समाः स्मृताः॥ ३७॥ दंपत्यो राशियोर्मैत्री मिथः स्याच्छोभनंतदा॥ अहि
तेत्व हितं विद्यात्समे वैसध्यमं स्मृतम्॥ ३८॥ अथ गण मैत्री॥ हस्त स्वाती श्रुतिः
पुष्यानुराधा रेवती द्वयम्॥ पुनर्वसुर्मृगश्चैव प्रोच्यते देवता गणाः॥ ३९॥ रोहिणी
भरणी पूर्वोत्तराद्रा मानुषो गणाः॥ चित्रा श्लेषा मघा मूलं धनिष्ठा शत तारका॥ ४०॥ ९२
४१ विशाखा कृत्तिका ज्येष्ठारण्य रक्षोगणो मतः॥ गणैक्ये परमा प्रीति र्देव मानुषयोः

समः ॥ देवराक्षसयोर्वैरं मृत्युर्मानवरक्षसोः ॥ ४१ ॥ अथ गणदोषापवादः ॥ मैत्र्यांश-
शीशयोरंशस्वामिनोर्वरकन्ययोः ॥ नतत्र गणदोषः स्याद्विवाहः शुभदो मतः ॥ ४२ ॥
यदि रक्षोगणा कन्या वरश्चेन्नृगणो भवेत् ॥ तदोद्वाहो गुणाधिक्ये कार्यस्त्वावश्यके ।
सति ॥ ४३ ॥ रक्षोऽमरगणा नारी चेत्तदोद्वाहनं तयोः ॥ योनिमैत्र्यादिना कार्यमिति
गर्गेण भाषितम् ॥ ४४ ॥ अथ राशिकूटम् ॥ राश्योर्षट्काष्टके मृत्युस्त्रिकोणे त्वनपत्यता
नैस्वं द्विद्वादशे ज्ञेयं सौख्यमन्यत्र चोभयोः ॥ ४५ ॥ कुभार्या विषमाद्राशेः षष्ठे तु वरभं तथा
समराशेः शुभं षष्ठं विपरीतमसत्स्मृतम् ॥ ४६ ॥ अथ दुष्टकूटापवादः ॥ प्रोक्ते दुष्टभकूटेऽपि
राश्योरेकाधिपत्यके ॥ मैत्र्यां चोद्वाहनं श्रेष्ठं ह्येकनाडी न चेत्तयोः ॥ ४७ ॥ तुलावृषभयोः ७।२
मीन १२ सिंहयोः ५ कुंभ ११ कन्ययोः ॥ धनुः ९ कर्कटयो ४ र्नक्र १० युग्म २ योश्चालि ८ मे-
षयोः १ ॥ ४८ ॥ प्रीतिः षट्काष्टकं चेत्तदन्यं संत्याज्यमेव हि ॥ राशियोर्वैरभावेऽपि मैत्री । ९२
चेत्स्यात्तदंशयोः ॥ नाडी पश्येच्च ताराणां शुद्धमुद्वहनं शुभम् ॥ ४९ ॥ अथ नाडीशुद्धिः ॥
ज्येष्ठा मूलाश्विन्यार्द्राख्यं द्वयं शतभिषग्द्वयम् ॥ उत्तराफाल्गुनीयुग्ममाद्यनाडीयमीरिता

मु.ग. ॥ ५० ॥ मृगशिरश्चित्रानुराधा च भरणी वसुपुष्यकौ ॥ जलभं योनि वुध्ने च मध्यनाडी प्रकी-
९३ र्तिता ॥ ५१ ॥ रोहिणी कृत्तिका श्लेषा मघा स्वाती द्वयं तथा ॥ रोहिणी चोत्तराषाढा श्रवणा-
श्चान्त्यनाडिका ॥ ५२ ॥ दंपत्योरेकनाडीस्थे ऋक्षे नेष्टः करग्रहः ॥ मध्यनाडीगते मृत्युस्त-
स्मात्तां सर्वथा त्यजेत् ॥ ५३ ॥ अथ नाडी दोषापवादः ॥ राश्यैक्ये भिन्नभेप्येकभेऽन्यराशौ त-
थैकभे ॥ भिन्नेंऽशे नैव द्वयोर्दोषो गणनाडी भकूटजः ॥ ५४ ॥ अथैकभेपि विशेषः ॥ वि-
शाखार्द्रा श्रवः पुष्यो रोहिण्युत्तरभाद्रपात् ॥ रेवती च मघा श्रेष्ठं नेतरच्चैकभद्वयोः ॥ ५५ ॥
अथ नाड्यादिदोषदानानि ॥ हेमाज्यं रत्नगोदानं मृत्युंजयजपस्तथा ॥ कुर्यादावश्यको-
द्वाहे नाडीदोषापनुत्तये ॥ ५६ ॥ ताम्रं द्विद्वादशे दद्यात्सुवर्णं च षडष्टके ॥ गोयुग्मं नवपं-
चाख्ये स्वर्णं वर्णादि दूषणे ॥ हेमान्नं वसनं धेनुं सर्वदोषापनुत्तये ॥ ५७ ॥ अथ वर्णादिगु-
णाः ॥ एकैकवृद्धितो ज्ञेया वर्णादीनां गुणाः क्रमात् ॥ विवाहे शुभदस्तेषां गुणोत्वद्दा द-
शाधिके ॥ ५८ ॥ अथ प्रकारांतरेण वर्णादीनां च गुणाः ॥ एको वर्णोत्तमे तुल्ये वर्णैक्ये ९३
कथितो वरे ॥ हीने शून्यं गुणाश्चैके वदन्ति सदृशे दले ॥ ५९ ॥ वश्यभक्ष्ये दलं वश्यं वैरे ह्येको

गुणाः स्मृताः ॥ गुणाद्वयं द्वयोःसख्ये वैरं भक्षेच खंस्मृतम् ॥ ६० ॥ शुभा चेदेकतस्तारा तदा
सार्धगुणो द्वयोः ॥ शुभाश्चेत्युस्त्रयः शून्यं भोभयोश्चेत्तयोः शुभाः ॥ ६१ ॥ अतिमैत्रेतु चत्वारो
योन्योर्मैत्रे त्रयो गुणाः ॥ औदासीन्ये द्वयं चैकं वैरं खंचातिशात्रवे ॥ ६२ ॥ मिथोवैरेतु शून्यं स्या-
त्समवैरे गुणाष्टकम् ॥ एकं शात्रव मैत्रेच द्वयोः साम्यं त्रयो गुणाः ॥ ६३ ॥ समं मैत्रेतु चत्वारः
पंचैकाधास्त्वरे तथा ॥ मित्रत्वे चोभयोस्तद्वद्राशिपोर्वरकन्ययोः ॥ ६४ ॥ मानुष्यां च स्त्रियं
देवे वरे तुल्य गुणोपि षट् ॥ पंचान्यथा स्त्रियं दिव्या नेको रक्षो गणोचरे ॥ ६५ ॥ रक्षो गणा यदा
कन्या वसेद्देवस्तदा तु खम् ॥ रक्षो मानुषयोः खंस्यादन्योन्य वरकन्ययोः ॥ ६६ ॥ द्वयोरेकपदा
भावे भकूटे योनि मैत्रतः ॥ कन्यादूरेपि चत्वारो ह्येकोप्येकतरे तयोः ॥ ६७ ॥ सत्कूटे योनिवैर
त्वेन र दूरे षडीरिताः ॥ राश्यैक्ये भिन्नभे पंच संघात्यत्र भकूटके ॥ ६८ ॥ कन्याया वरभं दूरे
कन्यादूरं हितच्छुभम् ॥ वरभाद्गीरु दूरं तद्विवाहेन शुभप्रदम् ॥ ६९ ॥ नाडी भेदे गुणाश्चाष्टौ तद्दे
वान्येपि सार्थकाः ॥ अजा गलस्तनायंते नाड्यैक्ये सकला गुणाः ॥ ७० ॥ अथ जन्मकाले भौ 
मदोषः ॥ मूर्तौ १ तुर्य्ये ४ स्मे ८ भौमे सप्तमे ७ त्ये १२ च जन्मनि ॥ भर्तुर्योषि द्विनाशः स्यात्त्रि-

याभर्तृविनाशनम् ॥ ७१ ॥ एवं विधे कुजे संख्ये विवाहो न कदाचन ॥ कार्य्यो वा गुरा-
बाहुल्ये कुजे वाता दृशोर्द्वयोः ॥ ७२ ॥ अथ त्रिविध कन्या योगः ॥ सूर्य्य भौमार्कि वारेषु ति-
थि भद्रा शताभिधम् ॥ आश्लेषा कृत्तिका चेत्स्या तत्र जाता विषांगना ॥ ७३ ॥ जन्मोर्लग्ने रि-
पुक्षेत्र संस्थितः पाप खेचरः ॥ द्वौ सौम्यावपि योगेऽस्मिन् संजाता विष कन्यका ॥ ७४ ॥
लग्ने शनैश्चरो यस्याः सुतेर्कि र्नवमे कुजः ॥ विषाख्या सापि नो ग्राह्या त्रिविधा विषकन्य-
का ॥ ७५ ॥ अथ विष कन्या दोष परिहारः ॥ सावित्र्यादि व्रतं कृत्वा वैधव्य विनि वृत्तये ॥
अश्वत्थादिभिरुद्वाह्यादद्यात्तांचिरजीविने ॥ ७६ ॥ अथ जन्म कालिक दुष्ट नक्षत्र फ-
लम् ॥ आश्लेषा ख्य समुत्पन्नो श्वश्रू कन्या सुतो हतः ॥ मूलजौ श्वशुरं हंति ज्येष्ठो त्था स्व-
धवा ग्रजम् ॥ ७७ ॥ अथा स्यापवादः ॥ आश्लेषा प्रथमः पादः पादो मूलां तिमस्त था
विशाखा ज्येष्ठयो राद्यास्त्रयः पादाः शुभावहाः ॥ ७८ ॥ इति वधूवरयो र्मूलापवादः ॥
अथ वाग्दानं कुमारी वरणां च ॥ विवाहो दित भे पूर्वा धनिष्ठा कृत्तिकाश्रवे ॥ कुमारी वर- ९५
१० योः कार्यं वरणां च शुभेऽहनि ॥ ७९ ॥ अथ विवाहादि कृत्ये निषिद्ध समयः ॥ जलाशय-

गृहारामप्रतिष्ठारंभणो तथा ॥ व्रतारंभ समाप्तौच दीक्षां सोमाध्वरादिकम् ॥ ८० ॥ महादा
न मुपाकर्म ग्रयणारम्भ मष्टकाम् ॥ केशान्ते वृषभोत्सर्गं देवतास्थापनं प्रथा ॥ ८१ ॥ व्रत
बंध मथोद्वाहं मुंडनं कर्ण वेधनम् ॥ गर्भाधानादि संस्कारान् कालातिक्रमणो शिशोः ॥
८२ ॥ देवतीर्थेक्षणं चाद्यं भूमिपालाभिषेचनम् ॥ अग्न्याधानंच सन्न्यासं चातुर्मास्य
मथोगमम् ॥ ८३ ॥ वेदव्रतं व्रतोत्सर्ग माद्यं वध्वाः प्रवेशनम् ॥ अस्ते शुक्रेज्य योर्बाल्ये वा
र्धके सिंह गे गुरौ ॥ ८४ ॥ त्रयोदश दिने पक्षे मासे न्यूनेऽधिके त्यजेत् ॥ धार्य्यं नेति जगुः
केचिदस्तादौ भूषणादिकम् ॥ ८५ ॥ सुवर्ण रत्न दन्तानां संधार्य मिति चापरे ॥ केचि
द्वकेऽति चारेपि नीच राशिगते गुरौ ॥ ८६ ॥ धनुर्मीन गते सूर्य्ये गुरुणा संयुते पिच ॥
अथ प्रकारांतरै र्मास द्वय मेवत्याज्यम् ॥ हेयं मास द्वयं जीवे नक्रस्थे शुभमीप्सुभिः ८७
अथ गुरोर्वक्राति चार विशेषः ॥ वक्रातिचारगे जीवेत्वष्टा विंशति वासरान् ॥ परित्यज्य
ततः कुर्याद्व्रतोद्वाहादिकं शुभम् ॥ ८८ ॥ अथ वक्रातिचार दोषापवादः ॥ त्रिकोणा ९६
१ द्याय संस्थे तु जीवे वक्रातिचारगे ॥ नदोष स्तत्र विज्ञेयः कुर्यादुद्वाहनादिकम् ॥ ८९ ॥

मु॰ग॰ अथ सिंहस्थ गुरोर्दोषः ॥ सिंह सिंहांशके जीवे विवाहादि न कारयेत् ॥ गोदाया उत्तरे
९७ भागे भागीरथ्याश्च दक्षिणे ॥ ९० ॥ अथ देश विशेषेण सिंहस्थ गुरु दोषा भावः ॥ गोदा
या यास्य दिग्भागे भागीरथ्यास्तथोत्तरे ॥ विवाहाद्यखिलं कार्य्यं सिंहस्थेपि बृहस्पतौ ॥
९१ ॥ अथ सिंहस्थ गुरौ सर्व देशेषु दोषापवादः ॥ सिंह राशिस्थिते जीवे मेषेर्केतु न दूषण
म् ॥ आवश्यके विवाहादौ सर्व देशेष्वपि स्मृतम् ॥ ९२ ॥ अथ मकरस्थे गुरौ विशेषः ॥
मगधे गौड देशे च सिन्धु देशे च कौंकणे ॥ विवाहादि शुभे त्याज्यो नान्य स्मिन्न कगो गुरुः
॥ ९३ ॥ अथ लुप्त संवत्सरः ॥ देव भूजाति चा सेना दश मासा तु राशयदि ॥ राश्यन्तर गते
भूयो ऋतेकुंभ चतुष्टयात् ११।१२।१।२ ॥ ९४ ॥ मार्गशीर्ष दिनो याति लुप्त संवत्सर
स्तदा ॥ गंगा नर्मदयो र्मध्ये देशः सोत्यंत निंदितः ॥ ९५ ॥ अथ कार्य विशेषे जन्मर्क्षयोः
प्राधान्यं ॥ देशग्राम गृह द्यूत व्यवहारे रणे ज्वरे ॥ दाने मंत्रे च सेवायां काकिण्यां वर्गयो
जने ॥ ९६ ॥ पुनर्भू मेलने ज्ञेया नाम राशेः प्रधानता ॥ अतोन्यत्र विवाहादौ प्राधान्यं ९७
जन्म भस्यहि ॥ ९७ ॥ अज्ञातजन यित्र्येतु नामभादेव चिंतयेत् ॥ जायापत्योर्म कूटाद्य

गोचराद्यखिलं तथा ॥ ९८ ॥ एकस्यापि च दंपत्योरज्ञाते जन्मभे तथा ॥ जन्मभाज्जु
गुरुष्याादि मेलनं नाम भाह्वयोः ॥ ९९ ॥ अथ विवाहे संवत्सरादि शुद्धिः ॥ गर्भाज्जन्म
दिनाद्वापि हायनात्यंच नात्ययम् ॥ आदशाब्दात्तु कन्याया विवाहो समवत्सरे ॥ २०० ॥
गौरीस्यादष्टवर्षा सा रोहिणी नव वार्षिकी ॥ दशाब्दा कन्यका ज्ञेया तस्मादूर्ध्वं रजस्व-
ला ॥ २०१ ॥ तत्र विशेषः ॥ ज्ञेया गुरुबला गौरी रोहिणी भानुमद्बला ॥ कन्या चन्द्रब-
ला ग्राह्या ततो लग्नबलेतरा ॥ २०२ ॥ अथ विवाहे रवि गुरु चन्द्र बलम् ॥ गुरोर्बलन्तु
कन्याया वरस्याथ बलं रवेः ॥ ग्राह्यं परिणये प्राज्ञैर्बलं चान्द्रं तयोर्द्वयोः ॥ २०३ ॥ अ-
थ कन्याया वटोश्च गुरुबलम् ॥ जन्मराशेर्गुरुः श्रेष्ठः पञ्चमो नवमो द्विगः ॥ एकादशः
सप्तमस्थः कन्यायाश्च वटोर्व्रते ॥ २०४ ॥ त्रि ३ षट् दशाद्यगो ६ । १० । १ मध्योनेष्टस्तु-
र्यो ४ ष्टमो ८ त्यगः १२ ॥ एकया पूजया मध्यस्तुर्यौन्त्यो हि गुणार्चया ॥ २०५ ॥ का-
लातिक्रमणे त्विष्टोह्यष्टमस्त्रि गुणार्चनात् ॥ गुरुः स्वोच्चे स्वमैत्रे वा स्वांशे वर्गोत्तमे ऽ-
पि वा ॥ २०६ ॥ शुभस्तुर्योष्टमोंत्योपि नीचारिस्थः शुभोप्यसत् ॥ वक्रातिचारगो वा

प्रियस्मिन राशौ समागतः ॥ २०७ ॥ तद्राशिज फलं धत्ते जीवो नो पूर्व राशिजम् ॥ २०८
अथ वरस्य रविफलम् ॥ रविस्त्रिषट्दशायस्थो वरस्योद्वहने शुभः ॥ मध्यः पंचमद्विः
सप्त नवमः पूजयोत्तमः ॥ द्विरर्च्यो द्वादशस्तुर्यो ऽथाष्टमस्त्रिगुणार्चनात् ॥ २०९ ॥ अथो
भयोश्चन्द्रबलम् ॥ ग्राह्यं प्रागुक्त शुद्धाहे द्वयोश्चान्द्रं समं बलम् ॥ २१० ॥ अथ मासादिदो
षापवादः ॥ जन्ममासादिके ज्येष्ठे विवाहो वरकन्ययोः ॥ आद्यगर्भसुवोर्नेष्टो नानाद्य
जनुषोस्तयोः ॥ २११ ॥ नेष्टः त्रिज्येष्ठ शुद्धाहे द्विज्येष्ठं मध्यमं स्मृतम् ॥ कृत्तिकास्थे
रवौ केचित्त्रिज्येष्ठं तु शुभं जगुः ॥ २१२ ॥ अथात्र प्रसंगाद्विवाहाद्युपयुक्तः शास्त्रार्थः ॥
नेष्टं त्युद्वाहनं केचिज्ज्येष्ठयोस्तु परस्परम् ॥ पुत्रोद्वाहात्तु परमान्न कन्याकरपीडनम् ॥
२१३ ॥ मुंडनान्मुंडनं वापि कुर्यात्शस्त्र मतोन्यथा ॥ सीमन्तोद्वाहनं चौलं केशान्तं व्रत
बन्धनम् ॥ २१४ ॥ गुरु मंगल मेतत्स्यात्तदन्यल्लघु मंगलम् ॥ गुरु मंगलयोर्नेष्टं
षण्मासाल्लघु मंगलम् ॥ २१५ ॥ शुभत्रयं तथा पित्र्यं त्याज्यं स्वीय कुले न सत् ॥ स· ९९
होदर प्रसूतानां भ्रातॄणां च समक्रिया ॥ २१६ ॥ षण्मासाभ्यन्तरं नेष्टा कन्यकानां तथै

वच ॥ प्रागुक्त मंगलं कुर्यादब्द भेदे थवा पुनः ॥ ११७ ॥ चतुर्दिनान्तरे वापि संकटे तु दिनां-
तरे ॥ एकाहेपि प्रकुर्वीत सरिद्गिरि गृहान्तरे ॥ ११८ ॥ तथा मराडय भेदेपि लग्न भेदे ययो-
चितम् ॥ यमयोस्तु विशेषोयं कार्याः सर्वाः सह क्रियाः ॥ ११९ ॥ एकोदर समुत्पन्न मेक-
स्मैकन्यका द्वयम् ॥ नदेये नैव कुर्याच्च सोदराभ्यां सहोदरे ॥ १२० ॥ विवाह निश्चया दूर्ध्वं-
कुलेवध्वाः कुलस्य च ॥ पित्रादेर्मरणे जाते विवाहो न तयोः शुभः ॥ १२१ ॥ अथवा वत्स-
राद्दूर्ध्वं मासषट्कादथापिवा ॥ मासोर्ध्वात्सूतकांतं वा शान्त्या शस्तः करग्रहः ॥ १२२ ॥
अथ विवाहे शुभमासाः ॥ मेष वृश्चिक कुंभेषु मकरे मिथुने वृषे ॥ रवौ पाणिग्रहः श्रेष्ठो
युग्मे दियाणु शायावधि ॥ १२३ ॥ वैशाखः फाल्गुनो माघो ज्येष्ठश्चैते शुभप्रदाः ॥ मासा-
उद्वहने मार्गो मध्योन्येत्व शुभा मताः ॥ १२४ ॥ वृश्चिके मकरे मेषे विद्यमाने दिवाकरे ॥
कार्तिकः पौषचैत्रौ च विवाहे तेपि शोभनाः ॥ १२५ ॥ मार्गशीर्षे धनुष्यर्के मीनार्कः फा-
ल्गुने शुभः ॥ सौरो व्रत विवाहादौ मासः सर्वत्र शस्यते ॥ १२६ ॥ चान्द्रो मासस्तु विन्ध्या- १००
द्रेर्भागे दक्षिणाके मतः ॥ योगस्तयोर्विवाहादौ शोभनः सौर चान्द्रयोः ॥ १२७ ॥ अथ

मु॰ग॰ विवाहे तिथि नक्षत्राणि ॥ षष्ठी दर्शोऽष्टमी रिक्ता कृष्णा पक्षान्त्य पञ्चके ॥ शुक्ला च प्रति-
१०१ पन्नेष्टा स्तिथयोऽन्ये तु शोभनाः ॥ १२८ ॥ सौम्यवाराः शुभा मध्यौ सूर्य्य मन्दौ कुजोऽध-
मः ॥ रोहिण्याम् उत्तरं मूले पित्र्य मैत्रांतिमे मृगे ॥ १२९ ॥ हस्ते स्वात्यां स्त्रगा क्षीराणां शो-
भनं कर पीडनम् ॥ सीतोढा पूर्व फाल्गुन्यां नोक्ते भे शमतो न सत् ॥ १३० ॥ अथ विवाहे
दश महा दोषाः ॥ वेधः पातो युतिः क्रान्तिर्लत्ते कार्गल पंचकम् ॥ दग्धोपग्रह जामित्र
दोषास्त्याज्याइमे दश ॥ १३१ ॥ अथ वेध दोषः ॥ रेखाः पञ्चोर्ध्व तिर्यक्स्था द्वे द्वे रेखे च ।
कोणयोः ॥ चक्रं पञ्च शलाकाख्यं विवाहे वेध साधनम् ॥ १३२ ॥ इति द्वितीय रेखातः
साभिजित्कृत्तिकादिकम् ॥ लिखेत्सव्यक्रमात्तत्र ग्रहा हेया यथायथम् ॥ १३३ ॥ वि-
वाहर्क्षैक रेखस्थे ग्रह वेधो भवेदिह ॥ पापैर्विद्धं त्यजेत्सर्व मसंत हरणां शुभे ॥ १३४ ॥
उत्तराषाढ तुर्यांघ्रि राद्य स्तिथ्यं शकः शुभे १५॥ सोभिजित्तत्रतः खेटो रोहिणी यत्र वि-
ध्यति ॥ १३५ ॥ अथ विवाहर्क्षाणां वेधस्योदाहरणम् ॥ रेवत्युत्तर फाल्गुन्यो भर- १०१
ण्याख्यानुराधयोः ॥ मघा श्रवणयोर्वेधः स्वाती शत भिषाख्ययोः ॥ १३६ ॥ वेधो




मूल पुनर्वस्वोरुफाख्यामृगयोरपि ॥ रोहिराय भि-
जितोर्वेध उत्तराभाद्रूहस्तयोः ॥ १३७ ॥ अन्यथो हा-
हनाज्ज्ञेयो वेधः सप्त शलाकजः ॥ पाप वेधेच नक्षत्रं
सम्पूर्णं त्याज्य मेवच ॥ १३८ ॥ शुभ वेधे चतुर्थांद्यो पा-
दयोर्हि तृतीययोः ॥ अथ वेधापवादः ॥ लग्ने शुभ-
ग्रहे वाथ लग्ने शोलाभ पो थवा ॥ सौस्यैर्दृष्टो शुतो वा-
पिकाल होरा शुभस्यवा ॥ १३९ ॥ वेध दोषस्तदा न-
स्या द्विवाहादौ सतांमतम् ॥ अथ पात दोषः ॥ शूल-
हर्षरा साध्यानां वैधृति व्यति पातयोः ॥ गण्ड स्यांते
चय द्विस्यांत चराडायुध पातितम् ॥ १४० ॥ अयं-
पाता नयनं प्रकारान्तरेण ॥ अनुराधा मघा श्लेषा श्रवश्चित्राचरेवती ॥ यत्रैतद्द्ग्रणा- 
त्तवरेखा कार्य्या विचक्षणैः ॥ १४१ ॥ रविभाङ्गानि विन्यस्यत्च त्रिवभाङ्गरायेत्क्रमात् ॥ यत्र

भेतत्र गारेखा तत्र पातो भवेद्ध्रुवम् ॥ १४२ ॥ अथ युति दोषः ॥ राशीश्च खेचरे चन्द्रे दोषः स्या-
त्तग्रहाभिधः ॥ सत्याज्यः शोभने केचिन्नेत्याहुः सबुधेज्यके ॥ १४३ ॥ अथ युति दोषापवादः
स्वर्क्षस्थः स्वोच्चगश्चन्द्रो मित्रक्षेत्रगतोपिवा ॥ गुरुर्वास्वीयवर्गस्थो बली केन्द्रगतो विधुः १४४
विलोकयन्ति चेद्दोषं नाशयन्त्येव संग्रहः ॥ अथ प्रकारान्तरेण युति दोषः ॥ चन्द्रर्क्षे पापयुक्
क्तस्याद्युति दोषस्तदोदितः ॥ १४५ ॥ अथ तस्यापवादः ॥ धिष्ण्यैके राशि भेदे भपाप युग्रा-
शिगं त्यजेत् ॥ १४६ ॥ अथ क्रान्ति साम्यदोषः ॥ ऊर्ध्वरेखा त्रयं चैव तिर्यग्रेखा त्रयं तथा ॥
क्रान्ति साम्यं बुधैर्ज्ञेयं मध्ये मीनन्तु योजयेत् ॥ १४७ ॥ मेष सिंहौ तुला कुम्भौ गोनक्रौ कर्क-
वृश्चिकौ ॥ कन्या मीनौ धनुर्मीनौ तत्राऽन्योन्यं स्थितावुभौ ॥ रविचन्द्रौ तदा ज्ञेयः क्रान्ति-
साम्यस्य सम्भवः ॥ १४८ ॥ अथ प्रकारान्तरेण क्रान्ति साम्य सम्भवः ॥ वृद्धियोगा-
चतुर्थेऽधो ब्रह्मयोगादि भे तथा ॥ क्रान्ति साम्यस्य सम्भूतिस्तत्र प्रायो भवेदपि॥१४९॥
अथ गणितागत मेकक्रान्तिसाम्यं त्याज्यम् ॥ प्रागुक्त सम्भवस्येत्थं यदि स्याद्गणिता- 
गतम् ॥ क्रान्ति साम्यं तदानेष्टं मध्यमन्यत्र सम्भवे ॥ १५० ॥ अथ त्रिंशत्कलात्यल्पे-

मु.ग. दोषः क्रान्त्यंतरेतयोः॥ रवीन्द्वोः क्रान्ति साम्यस्य नाधिके दोष ईरितः ॥ १५१ ॥ अथल
१०४ त्तादोषः ॥ स्वराशेर्द्वादशः सूर्यः षष्ठे जीवोष्टमः शनिः ॥ तृतीये धरणीसुत्रः पुरोल
त्ता परिग्रहः ॥ पश्चात्सप्तमभं सौम्यो नवमं सिंहिका सुतः ॥ १५२ ॥ अथै कार्गलदो
षः ॥ योगांके विषमे सैके साष्टा विंशति के समे ॥ तदर्ध संख्यभं मूर्ध्नि चक्रे खार्जुरकेल्प
जेत् ॥ १५३ ॥ अथ तस्यो दाहरणम् ॥ व्यतीपाते भगाश्लेषा व्याघाते तु पुनर्वसुः ॥ अति
गंडे नुराधा च मूर्ध्निभं परिघे मघा ॥ १५४ ॥ विष्कम्भे चाश्विनी पुष्यो वज्रे चित्रा तु वै धृतौ
तथा शूले मृगो गंडे मूलभं मूर्ध्नि विन्यसेत् ॥ १५५ ॥ योगेष्वेतेषु संभूति र्नान्येष्वे कार्ग
लस्य च ॥ १५६ ॥ अथ तस्य चक्रम् ॥ एका चोर्ध्व गता रेखा तिर्यक्कार्यास्त्रयोदश ॥
मूर्ध्निभं मूर्ध्नि विन्यस्य साभिजिच्च ततोन्यसेत् ॥ १५७ ॥ एकार्गलो मिथश्चैक रेखा ग
श्चे द्विधू रविः ॥ विवाहादि शुभे कार्ये नेष्टस्त्वे कार्गलाभिधः ॥ १५८ ॥ अथ पंचक दोषः
षट् ६ त्र्ये ३ का ११ ष्ट ८ चतुः ४ संख्या संक्रांती शेषगतैर्युताः ॥ पंच ५ शेषैर्ग्रहे र्भक्तं विज्ञेयं १०४
बुध पंचकम् ॥ १५९ ॥ रोगो वह्नि र्नृप श्चौरो मृतिर्वै पंचके क्रमात् ॥ शेषैक्येनव भिर्भक्ते पंच-

शेषे सशल्यकम् ॥ २६० ॥ अथ दाक्षिणात्य प्रसिद्ध पञ्चकम् ॥ शुक्लाद्यास्तिथयोया-
तालग्नाढ्या भाजिताग्रहैः ॥ शेषेऽष्ट ८ द्वि २ चतु ४ स्तर्क ६ भूमिते बाणा पञ्चकम् ॥
२६१ ॥ रोगोऽग्नि नृपती चौरो मृत्युश्चेति यथा क्रमम् ॥ प्रसिद्धं दाक्षिणात्यानां शुभंका-
र्ये विवर्जयेत् ॥ २६२ ॥ अथ तयोरपवाद व्यवस्था ॥ रात्रौ चौर रुजौ जह्याद्दिवसे राज पं-
चकम् ॥ संध्ययोरुभयोर्मृत्युः सर्वदा वह्नि पञ्चकम् ॥ २६३ ॥ रवौ रोगं नृपं मन्दे बुधे मृ-
त्युं परित्यजेत् ॥ भौमे तु पावकं चौरं लग्ने हीनबलेन सत् ॥ २६४ ॥ लग्ने पूर्णबलोपेते न दो-
षः पंचकस्य च ॥ रोगे रोगं गृहे वह्निं मार्गे तु चौर पञ्चकम् ॥ विवाहे मृत्यु संज्ञं च सेवायां पं-
चकं त्यजेत् ॥ २६५ ॥ अथ दग्धा तिथिः ॥ द्वितीया धन्वि मीनेऽर्के चतुर्थी वृष कुम्भयोः ॥
षष्ठी कर्काजयोः प्रोक्ताऽष्टमी मिथुन कन्ययोः ॥ २६६ ॥ सिंहाल्योर्दशमी ज्ञेया द्वाद-
शी तुलनक्रयोः ॥ इत्येतास्तिथयो दग्धा विवाहादौ न शोभनाः ॥ २६७ ॥ अथोपग्रह-
दोषः ॥ अष्टमं ८ पञ्चमं ५ चाष्टदशं १८ वाथ चतुर्दशम् १४ ॥ द्वाविंशो २२ कोनविंशो च १०५
१० १९ त्रयोविंशो २३ तथैव च ॥ २६८ ॥ चतुर्विंशं २४ स्तथैतानि नक्षत्राण्यथ सूर्यभात् ॥ उ-

क्तान्युप ग्रहाख्यानित्याज्यान्युद्वाहनादिषु ॥ १६९ ॥ दिक् १० सप्त ७ तिथि १५ तत्वा
ख्य २५ स्वर्ग संख्यानि २१ भानिच ॥ एतान्यपिजगुश्चोप ग्रह र्क्षाणीति केचन ॥ १७०॥
अथ लत्तोप ग्रह पात दोष दुष्टस्य त्याज्यः पादः ॥ यत्संख्य चरणे खेटस्तत्संख्यं चरणंत्य
जेत् ॥ लत्तोपग्रह पातेषु त्याज्या नैवांऽग्रयः परे ॥ १७१ ॥ अथ जामित्र दोषः ॥ चन्द्रा-
द्विलग्नतोवापि सप्तमो यदि खेचरः ॥ तदा जामित्र दोषः स्यात्क्रूरोत्थस्त्वति निन्दितः
॥ १७२ ॥ चतुर्दशेवा नक्षत्रे जामित्रे केश्चिदुच्यते ॥ नवांशे पञ्च पञ्चांशे ५५ सूक्ष्मं जामि
त्रगं परे ॥ १७३ ॥ अथ लत्तोप ग्रह जामित्रै कार्गल कर्त्तरी दोषाणामपवादः ॥ लत्तोप-
ग्रह जामित्र पाते कार्गल कर्त्तरी ॥ एते दोषा विनश्यन्ति लग्नेऽर्के दुर्बलान्विते ॥ १७४॥
अथ देश विशेषे दोष व्यवस्था ॥ कुरु बाह्लिकयोर्देशे त्यजेदुप ग्रहर्क्षकम् ॥ सौराष्ट्रे-
मालवे लत्तां पातं वंग कलिंगयोः ॥ १७५ ॥ एकार्गलं तु काश्मीरे विद्धभं सर्वदेशके ॥
१७६ ॥ अथैक विंशति महा दोषाः ॥ आदौ पंचांग जो दोषः संक्रान्तिश्चैव कर्त्तरी ॥ संग्र- १०६
हः कुनवांशाख्यो गण्डान्तै कार्गलाभिधौ ॥ १७७ ॥ दुःक्षणो वारजा दोषाः पाप भं-

जं ॥ १७८ ॥ ग्रहसोत्पातन-
मु.ग. विषनाडिका: ॥ विद्वर्क्षक्रान्ति साम्यंच तथा दृष्टिरकालजा ॥ १७८ ॥ ग्रहसोत्पातन-
१०७ क्षत्रंपाप षड्वर्ग कस्तथा ॥ जन्म लग्नेन्दु राशिस्था मष्टसंलग्न मेवच ॥ १७९ ॥ षडष्टान्त्य-
गत श्चन्द्रो भृगु: षष्ठ: कुजोऽष्टम: ॥ लग्नास्तोत्य इति प्रोक्ता एक विंशति संख्यका: १८०
महादोषा विवाहादौ शुभे त्याज्या: शुभेप्सुभि: ॥ विवाहादन्य कार्येतु जामित्रं नैव चिंतये-
त ॥ १८१ ॥ अथ पूर्वोक्तेभ्योयेऽवशिष्टास्ते लिख्यंते ॥ अथ कर्त्तरी दोष: ॥ द्रविणं व्यय-
योर्लग्ना चन्द्राद्वा पाप खेचरौ ॥ यदिस्यातां तदा ज्ञेया कर्तरी तां परित्यजेत् ॥ १८२ ॥ अथ
कर्तरी दोषा पवाद: ॥ लग्नाद्द्विरि: फगो क्रूरो व्यय मे तत्समांशकम् ॥ तदा कर्त्तरिजा दो-
षा अन्यथा भावजं फलम् ॥ १८३ ॥ धनेमार्गी व्यये वक्री वक्रौ वामार्गजावुभौ ॥ लग्ने स-
द्वादशो सौम्यो यदि चेत्कर्त्तरी न सा ॥ १८४ ॥ शुक्रजीव बुधै: केन्द्रकोणगै: सानदु:खदा ॥
कर्त्तरीकारकौ पापौ शत्रुनीचर्क्षगौ यदि ॥ १८५ ॥ अथ वास्त मितौ तत्र न दोष: कर्त्तरी भव: १०७
॥ १८६ ॥ अथ नक्षत्र विष घटिका: ॥ खबाणा ५० अजिता २४ स्त्रिंश ३० त्ववेदा ४० मनव:
२४ क्रमात ॥ खगा २१ स्त्रिंश ३० न्नखा २० दंता ३२ खरामा ३० विंशति २० र्द्धति: १८ ॥ १८७ ॥

मु.ग. भूनेत्रा २१ खयमाः २० शाका २४ रुद्रा ११ काष्ठा १० श्चतुर्दश १४ ॥ षट्पचाश ५६ ज्जिना २४
१०८ श्चैकविंशतिः २१ काकुभो २० दिशः १० ॥ १८८ ॥ धृति १८ भूपा १६ जिना २४ स्त्रिंशा ३० दशविभा-
हृटिका स्मृताः ॥ आस्यचतुष्टयं त्याज्यं घटिकानां विषासिधम् ॥ १८९ ॥ सर्वर्क्षघटिका भिश्च
प्रोक्तर्क्षघटिका हताः ॥ षष्ट्या भक्ताः स्फुटा नाड्यस्तथा स्युर्विषनाडिकाः ॥ १९० ॥ अथ तिथि-
विषघटिकाः ॥ तिथि २५ बाणा ५ ष्ट ८ सप्तां ७ ग ६ पंच ५ वेदा ४ ष्ट ८ भूधराः ७ ॥ दि १० ख-
ह्न ३ र्क १२ मनु १४ क्ष्माभृ ७ द्वसवो ८ घटिकाः क्रमात् ॥ १९१ ॥ आस्यो घटी चतुष्कं च विषं
प्रतिपदादितः ॥ १९२ ॥ अथ वार विष घटिकाः ॥ नख २० युग्मा २ र्क १२ दिक् १० सप्त ७
बाणा ५ तत्त्व २५ मिताः क्रमात् ॥ आस्यो नाडी चतुष्कं च विषं तद्वद्दिवाकरात् ॥ १९३ ॥ अ-
थ विषनाडीदोषापवादः ॥ कोणा ५।९ स्त्वब्धि ४ नभः संस्थः सुहृत्सौम्ये क्षितोऽपि वा ॥ सद्रा-
शौ वा विधुः स्वांशे लग्ने वा केन्द्रकोणगः १।४।७।१०।५।९ ॥ १९४ ॥ निहन्यादखिलं दोषं-
विषनाडीसमुद्भवम् ॥ १९५ ॥ अथ ग्रह दृष्टिः ॥ तृतीय ३ दशमे पादे १०।१५ त्रिकोणे ५। १०८
९ द्विहयं ०।२।३० ग्रहः ॥ पश्येत्तुर्ये ४ ष्टमे ८ पादत्रयं ०।४।५ पूर्णांतु ६।१० सप्तमे ७।८।५ ॥ १९६ ॥

पूर्णांतु त्रिदशं मन्दो पंचमं नवमं गुरुः ॥ भौमोऽष्टमं चतुर्थं च सप्तमं सकला ग्रहाः ॥ १९७ ॥
 अथ लग्न सप्त शुद्धिः ॥ लग्ने लग्नलवे वापि लग्नांशोऽशायुतेक्षिते । लवेश शुभ मित्र श्चेद्दृष्टे वा
स्वामिनः शुभम् ॥ १९८ ॥ द्यूनांशो द्यून लग्ने वा द्यूनांशोंश युतेक्षिते ॥ द्यूनांश पति सं मित्र दृष्टे
वध्वाः शुभं स्मृतम् ॥ १९९ ॥ लग्नेशो लग्न मंशो यः स्वांशं पश्यति वा मिथः ॥ तद्वरस्य शुभं ज्ञेय-
मन्यथा नैव शोभनम् ॥ २०० ॥ द्यूनेशोऽस्तं तथाऽस्तेशपतिर्द्यूनांश मीक्षिते ॥ सन्मिथो वात-
दा वध्वाः शुभं त्वितरथा नहि ॥ २०१ ॥ अथ पंगवंधादित्याज्य लग्नानि ॥ दिवा पंगुर्घटो ज्ञेयो
वधिरौ तुल वृश्चिकौ ॥ अंधो मेषो वृषः सिंहः सन्धौ कुब्जा मृगात्त्रयः ॥ २०२ ॥ रात्रौ पंगुर्मृगश्चां-
ऽधाः कन्या मिथुन कर्कटाः ॥ वधिरौ तु धनुर्नक्रौ तत्काले तान्परित्यजेत् ॥ २०३ ॥ अथ हो-
लिकाष्टकम् ॥ ऐरावत्यां विपाशायां शुतुद्रौ पुष्कर त्रये ॥ होलिकाष्टदिनान्यष्टौ विवाहा-
दौ शुभे त्यजेत् ॥ २०४ ॥ अथ केषांचिद्दोषाणामपवादः ॥ राशयो मास शून्याश्च लग्नं का-
णान्ध पंगुयत् ॥ तत्याज्यं मालवे गौडे नान्यत्राशुभदं स्मृतम् ॥ २०५ ॥ हन्याद्दिनर्क्षजं दोषं । १०९
१०९ तिथि सिद्ध समुद्भवम् ॥ गुरुः केन्द्रगतः शून्य तिथिजं लाभगः शुभः ॥ २०६ ॥ अथ गंडांतदोषा-

पवादः ॥ बलींदुर्हंति दोषंच तिथिगंडान्तसम्भवम् ॥ लग्नगण्डांतजं दोषं बलिष्ठः शुक्रभूजितः
त्रिविधं चाति गण्डान्तमभिजिच्छुभदः स्मृताः ॥ २०७ ॥ अथ कुलिकयमघंटयोरपवादः
सहजं वासराधीशो बलोपेतो भवेद्यदि ॥ लग्नगो वा तदा दोषो निहन्ति कुलिकोद्भवम् ॥ २०८ ॥
केन्द्रकोणे शुभः खेटो लग्नाद्वाराधिपोऽपि वा ॥ यमघंटोद्भवं दोषं निहन्ति शरल्लोपमम् ॥ २०९ ॥
अथाष्टमलग्नदोषापवादः ॥ वृषभो वृश्चिको मीनः कन्या मकरकर्कटाः ॥ लग्नेष्वेतेषु नो
दोषो जन्मताराष्टमेष्वपि ॥ २१० ॥ अथाब्दायंधकाणादिलग्नदोषापवादः ॥ अब्दायनर्तुमा-
सर्क्षपक्षदग्धाहसंभवाः ॥ अन्धकाणादिलग्नोत्थास्तथायेन्दुनवांशकाः ॥ दोषा नश्यन्ति
जीवज्ञशुक्रैः केन्द्रत्रिकोणगैः ॥ २११ ॥ अथ कुनवांशादिदोषापवादः ॥ कुनवांशग्रहो-
द्भूताः षड्वर्गोत्थाल्पनजाः ॥ शशिन्येकादशे सर्वे दोषा नश्यंति वै ध्रुवम् ॥ २१२ ॥ अथ सर्वदो-
षापवादः ॥ लग्ने वर्गोत्तमे वेंदौ द्यूनाथे लाभगेऽथवा ॥ केन्द्रकोणे गुरौ दोषा नश्यंति सकला
अपि ॥ २१३ ॥ केन्द्रकोणेऽपि जामित्रे दोषाणां च शतं बुधः ॥ शुक्रः शतद्वयं हन्याल्लक्षं तु वच-
स्पतिः ॥ २१४ ॥ लग्नेशो वा लवाधीशो लाभे केन्द्रे च संस्थितः ॥ दोषराशिं हत्वा शुतल-

मु.ग. राशिमिवानलः॥ २१५॥ अथ विवाह शुभनवांशाः॥ कन्यायुग्मधनुस्तौलिनवांशाःशुभदाः
१११ स्मृताः॥ विवाहेऽन्येतु मीनस्य नवांशं शुभदंजगुः॥ २१६॥ लववर्गोत्तमंहित्वा विवाहो नास्तिमे
शके॥ चरांशेपि चरेलग्नेतुलानक्रस्थिते विधौ॥ २१७॥ अथ विवाह लग्ने भंगदाग्रहाः॥ लग्ने
शनैश्चरः सूर्य्यो लग्नारिनिधने शशी॥ लग्नेऽष्टमे मही सूनुरष्टमे बुधवाक्पती॥ २१८॥ राहुः
सूर्य्यो विलग्ने च निधनारिगतो भृगुः॥ द्यूनेतु खेचराः सर्वे विवाहे भंगदाः स्मृताः॥ २१९॥
कुजः स्वेद्वादशे मन्दो लग्नेशो निधनारिगः॥ तृतीये भार्गवश्चन्द्रो व्यये तेनैव शोभनाः॥ २२०॥
अथ भंगद ग्रहापवादः॥ शत्रुनीचर्क्षगः शुक्रो न दोषायारि६ संस्थितः॥ नाशुभश्चाष्टगो भौ-
मः शत्रुनीचास्तगोयदि॥ २२१॥ नीचो नीचांशगश्चन्द्रो नाशुभोष्टारिरिःफगः॥ लग्नेबली
गुरुः शुक्रश्चन्द्रोवा शुभवर्गगः॥ शुभदृष्टो निहंत्येव दोषंरिःफारिचन्द्रजः॥ २२२॥ अथ वि-
वाह लग्ने रेखाप्रदाग्रहाः॥ निधनारित्रिलाभस्था अर्कार्कि शिखिराहवः॥ लाभत्रिशत्रु-
गो भौमो हि त्रिलाभगतः शशी॥ २२३॥ खास्ताष्टान्त्यं विना सौम्येद्यूनाष्टांत्यं विनागुरुः १११
अष्टास्तारिव्ययं हित्वा शुक्रो रेखाप्रदः शुभः॥ २२४॥ अथ मध्यमफलदा ग्रहाः॥

 सदसत्स्थानतोऽन्यत्रस्थिता मध्यफलाग्रहाः ॥ २२५ ॥ अथ रेखाप्रदग्रहाणां विंशोपकाः
 सार्धत्रयं रविः सार्धं सौमार्कि शिखिराहवः ॥ द्वौ शुक्रोऽज्ञश्च पंचेन्दुरंशौ स्वीन वितरे गुरुः ॥
२२६ ॥ लग्नं शुभं विवाहे स्याद्दश विंशोपकाधिकम् ॥ २२७ ॥ अथेष्टकालज्ञानं ॥ परं
दिनं द्युमानेन नवघ्न ९ तिथि १५ भाजितम् ॥ विलब्धं चांगुलाद्यं यत्साभवेद्दिन मध्यभा ॥
२२८ ॥ पादेभा मध्यभाहीना सप्त युग्द्वि गुणातत ः ॥ भजेत्सप्तहतं यत्तन्मानं लब्धास्तु
नाडिकाः ॥ २२९ ॥ प्रत्यगर्के तु शेषास्ताः प्रागर्के तु गताः स्मृताः ॥ रात्रीष्टकाल विज्ञा-
नं चतुः पूर्वमुदाहृतम् ॥ २३० ॥ अथेष्टकालाल्लग्नानयनम् ॥ सायनार्केष्टभागघ्नानिजो-
दयविनाडिकाः ॥ खत्रि ३० भक्ता भवेद्भोग्यकालो लब्धः पलात्मकः ॥ २३१ ॥ शोध्यो-
ऽभीष्ट घटीभ्यश्च तदग्र भानिजोदयाः ॥ शोध्याः शेषं खरास ३० घ्नमशुद्ध मिति भाजितम् ॥
२३२ ॥ लब्धं संशादिकं योज्यं मेषाद्यैः शुद्धराशिभिः ॥ अयनांश विहीनं तद्धि लग्नं तत्स्फु-
टं भवेत् ॥ २३३ ॥ भोग्यकालोऽथ शुध्येच्चे दिष्टकालः पलात्मकः ॥ खराम ३० घ्नो हतः स्वीयो- 
दयेनाप्तं लवादिकम् २३४ योज्यं पूर्वं स्फुटं लग्नमयनांश विवर्जितम् ॥ रात्रीष्टकालतो वापि

मु॰ग॰ स्वषड्भार्काच्च पूर्ववत् ॥ २३५ ॥ अथ स्पष्टलग्नादिष्टकालानयनम् ॥ भानोर्भोग्य स्तुयः का-
११३ लो भुक्तकालस्तथा तनोः ॥ तदैक्य मेतयोर्मध्योदयाढ्यं समयस्फुटम् ॥ २३६ ॥ यद्येक-
र्क्षे तु लग्नार्कौ तयोर्भागांतरैर्हत ः ॥ स्वीयोदयः खरामाप्तो ३० भीष्टकालः स्फुटस्तदा ॥
२३७ ॥ अथ विवाहे प्रशस्तयोगः ॥ शुभैर्लग्नगतैः खेटैरशुभैर्निधनोपगैः ॥ ध्वजोयं परि-
णीता त्र युवती प्रिय वल्लभा ॥ २३८ ॥ कुजेर्के लाभ ११ गेयद्वे शनौ चन्द्रे द्वितीयगे २ ध-
नस्थैः ९ खेचरै रन्यैः श्रीवत्सो योग उत्तमः ॥ २३९ ॥ यदिस्यात्कन्यकालग्ने तृतीये चन्द्र-
वाक्पती ॥ पंचमे भृगुरानन्दो योगाच्चानन्द कृत्सहि ॥ २४० ॥ लाभेऽर्केऽरिगृहे ६ भौमो
दुश्चिक्येथ शनैश्चरः ॥ योगोयं सर्व चन्द्राख्यस्तत्रोढा शुभगा सती ॥ २४१ ॥ गुरौ धर्मे ९
बुधे मूर्तौ लाभे ११ मन्दे राजाभिधः ॥ परिणीते ह्वा मास्ती साध्वी धर्मार्थदायिनी ॥ खतु-
र्येनव १०।४।९ गैः सौम्यैः शंखोऽयं शुभ कृत्सदा ॥ २४२ ॥ अथ नेष्टयोगः ॥ पापाश्चक्रस्य
पूर्वार्धे परार्द्धे सौम्य खेचराः ॥ विवाहे चक्रयोगोऽयं तदोढा जारिणी भवेत् ॥ २४३ ॥ सर्वैः ११३
केन्द्रगतैः पापैर्वापी योगोपि निंदितः ॥ सौम्यैर्लग्ने १ व्यये १२ वित्ते २ पापैः कोदंडकोप्य

मत् ॥ २४४ ॥ भौमे द्वादशगे १२ षष्ठे ६ शुक्रे तुर्ये ४ शनैश्चरे ॥ कुठारोऽयं समाख्यातः शु-
भवल्ली विदारणः ॥ २४५ ॥ व्यये १२ केंद्रविगे २ शुक्रेरिगे ६ मन्देऽष्टगे ८ विधौ ॥ योगः
स्यात्कर्मनामाऽयं नवोढा भिक्षुकी भवेत् ॥ २४६ ॥ खौ लग्ने १ व्यये १२ मन्देऽष्टमे ८ कुजे मुसला-
भिधः ॥ तत्रोढाया कुमारी साकुल मारी भवेद्ध्रुवम् ॥ २४७ ॥ अथ गोधूलिक लग्नम् ॥ निं-
द्यादि कुलिकं क्रान्ति विद्धमं पापयुक्तथा ॥ लग्ना १ ष्टा ८ रि ६ गतं चन्द्रं लग्ने गोधूलि
के त्यजेत् ॥ २४८ ॥ नान्ये गोधूलिके चिन्त्या दोषा श्वराडादयस्तथा ॥ प्रयच्छंते यतः सर्वे गोर-
जोभिः समंततः ॥ २४९ ॥ द्वि त्रिलाभस्थिते चन्द्रे श्रेष्ठं गोधूलिकं मतम् ॥ लग्नास्त शत्रुतो-
ऽन्यत्र चन्द्रे संस्थे तु मध्यमम् ॥ २५० ॥ दोषाः पंचांगजा लग्नग्रहजा मित्रसंभवाः ॥ लत्तापा-
ताष्टमस्थान नवांशक्षणजास्तथा ॥ २५१ ॥ एतेन्येप्यखिला नैव हेया गोधूलिके सदा २५२
अथ गोधूलि समयः ॥ अर्धास्तात्पूर्व मप्यूर्ध्वं घटिकार्धं तु गोरजः ॥ सकालो मंगलः श्रेयान्
विवाहादौ शुभप्रदः ॥ अर्धबिंबात्परं के चिद्घटीद्वय मितं जगुः ॥ २५३ ॥ निदाघे सार्ध बिंबेऽर्के ११५
॥॥ पिंडीभूते हिमागमे ॥ मेघकाले तु पूर्णोऽस्ते प्रोक्तं गोधूलिकं शुभम् ॥ २५४ ॥ अलब्धे घटिकालग्ने

मु॰ग॰ विप्राणां गोरजः स्मृतम् ॥ गोरजोहीनवर्णानां शूद्रादीनामथो स्मृतम् ॥ २५५ ॥ अथ विवाहे
११५ लग्नाच्छ्वशुरादीनां शुभाशुभ फलम् ॥ लग्नं देहो भृगुः श्वश्रूः श्वशुरोऽर्कयनः शशी ॥ भर्त्ता
कांताकलत्रे शास्तद्बला तत्सुखं भवेत् ॥ २५६ ॥ पतिं सूर्य्याद्विधोः कांतां धनं भौमात्सुतान्
बुधात् ॥ सुखं जीवाद्भृगोर्धर्मं वेश्मार्के मूलतो वदेत् ॥ २५७ ॥ सुखं स्वोच्चादिगैर्ज्ञेयं दुःखं नीचा
स्तगादिभिः ॥ २५८ ॥ अथावश्यके राज्ञां खड्ग विवाहः ॥ चन्द्रपंचांगसंशुद्धौ सौम्यायन विवा
हके ॥ राज्ञो गोधूलिके लग्ने खड्गोद्वाहः प्रशस्यते ॥ २५९ ॥ अथ हीनजातीनां विवाहे विशेषः
अनुक्ततिथिमासर्क्षैः संकीर्णानां शुभप्रदः ॥ विवाहे धनपुत्रायुः प्रीतिसौख्यकरो भवेत् २६०
अथ शूद्रादीनां स्त्रियाः पुनर्विवाहः ॥ शूद्रादीनां विवाहर्क्षे पुनरुद्वहनं स्त्रियाः ॥ रात्रौ कुर्य्यान्न
तत्रास्त तिथि मासादिदूषणम् ॥ २६१ ॥ सूर्य्यभाद्वेद ४ नेत्रा ६ ग्नि ९ भू १० चन्द्रा ११ ब्धि १५
रसा २१ ग्नयः २४ ॥ भू २५ राम २८ संमितास्ता रागांधर्वादि विवाहके ॥ २६२ ॥ नेष्टाः श्रेष्ठाः
क्रमादेताः स्त्रियश्च गदिता बुधैः ॥ २६३ ॥ अथ विवाहांगकार्य्यम् ॥ कार्यं विवाहकार्यांग । ११५
॥० विवाहोदित भादिभिः ॥ विबलं च विधुं हित्वा त्रिषट्नवमं दिनम् ॥ २६४ ॥ विशाखा स्वाती

मु॰ग॰ चित्राज्येष्ठाख्याम श्विनीश्रातम्॥ आर्द्राचतुष्टयंहित्वाकुर्याद्वैवाहिकंविधिम्॥ २६५॥ हरि-
११६ द्रपूजनंतैलंसकलंचांकुरार्पणम्॥ भूषणंकंकणाद्यंचवेदिकामंडपादिकम्॥ २६६॥ तैलादि-
लापनेदिनसंख्याः॥ मेषादिराशिजातानां कुर्यात्तैलादिलापनम्॥ शैल ७ दि १० ग्वाराा ५ सप्ता-
७ ग ६ इषु ५ पंचे ५ शव: ५ शरा: ५ ॥ बाणा ५ शैला ७ त्रय ३ श्चैवक्रमात्कैश्चिदितीरितम् २६७
अथ विवाहवेदिका॥ चतुरस्त्रांकरोच्छ्रायां चतुर्हस्तां सुवेदिकाम्॥ वेश्मनोवामभागेचकुर्या-
त्स्तंभोपशोभिताम्॥ २६८॥ ईशान्यां स्थापयेत्स्तंभं सिंहादित्रिभगेरवौ॥ वृश्चिकादित्रिभेवा-
यौनैर्ऋत्यांकुंभतस्त्रिभे॥ वृषात्त्रये तथाग्नेय्यांस्तंभस्थापनतत्त्वेवहि॥ २६९॥ अथ विवाहा-
नंतरंमंडपोद्वासनम्॥ मंडपोद्वासनंषष्ठं हित्वाकुर्यात्समेहनि॥ पंचमे सप्तमेवापिशुभर्क्षे-
शुभवासरे॥ २७०॥ अथ विवाहानंतरंवधूप्रवेशः॥ लग्नाद्द्वि समे पंचसप्त केप्यथषोडशात्
ततस्त्वापंचमाद्वर्षादोजाहेमासिवत्सरे॥ २७१॥ यथेच्छंतुततोवध्वाःप्रवेशःशुभदःस्मृतः॥श्र-
वणाद्वितयेमूलेऽनुराधारोहिणीमृगे॥ २७२॥ हस्तत्रयेमघापुष्येश्युत्तरेरेवतीद्वये॥ प्रवेशःशु- ११६
भदोवध्वाःसोमेशुक्रेगुरौशनौ॥ २७३॥ सध्योबुधेकुजेऽर्केतुनेष्टोरिक्तातिथौतथा॥ शुभवर्गोब-

लोपेते लग्ने चांशे शुभः स्मृतः ॥ २७४ ॥ अथ विवाहात्तरं प्रथमाब्दे मास विशेषेण वध्वानिवा-
सदोषः ॥ उद्वाहात्प्रथमे ज्येष्ठे यदि पत्युर्गृहे वसेत ॥ पत्युर्ज्येष्ठं तदाहंति पौषेतु श्वशुरं तथा ॥
२७५ ॥ श्वश्रूं चाषाढ मासेतु चाधिमासे स्वकं पतिम् ॥ आत्मानं तु क्षये मासि तातं तात गृहे मधौ
॥ २७६ ॥ अथ द्विरागमनम् ॥ विवाहा द्वियमे वर्षे कुम्भ मेषालि गेरवौ ॥ बलिन्यर्के विधौ जीवे
शुभाहे चाश्विनी मृगे ॥ २७७ ॥ रेवती रोहिणी पुष्ये श्युत्तरे श्रवणात्रये ॥ हस्तत्रये पुनर्वस्वोत-
या मूला नुराधयोः ॥ २७८ ॥ कन्या मीन तुले युग्मे वृषे प्रोक्त बलान्विते ॥ लग्ने पञ्च दला स्त्री-
णां द्विरागमन मिष्यते ॥ २७९ ॥ सन्मुखे दक्षिणे शुक्रे नो गच्छेत्तु कदाचन ॥ गर्भिणीतु वि-
गर्भा स्यान्नवोढा वंध्यता मियात ॥ २८० ॥ बालकश्चे द्विपद्येत विगेहा दपि चेद्व्रजेत २८१
अथ दीपमाला प्रवेशे दोषापवादः ॥ सिंहस्थे वा गुरौ शुक्रे सन्मुखे संगते पिवा ॥ शुभा
दीपोत्सवे वध्वाः प्रवेशः पति मन्दिरे ॥ २८२ ॥ अथ प्रति शुक्र दोषापवादः ॥ एकस्मि-
न्नगरे ग्रामे देश राज्ञ उपद्रवे ॥ दुर्भिक्षे तीर्थ यात्रायां नव वध्वाः प्रवेशने ॥ २८३ ॥ विवाहे ११७
सर्वदोषाय प्रति शुक्रस्तथा बुधः ॥ अत्र्यं गिरो वशिष्ठानां वत्स कश्यपयोर्भृगोः २८४

भरद्वाज मुने र्गोत्रे प्रति शुक्रो न दुष्यति ॥ पित्रागारे यदि स्त्रीणां स्तनपुष्पोद्गमो भवेत
॥ २८५ ॥ गमनं प्रति शुक्रेऽपि प्रशस्तं पति वेश्मनि ॥ २८६ ॥ इति श्री महैवज्ञ रावलह-
रिशंकर सूरि सूनु गणपति कृते मुहूर्त्त गणपतौ वधू प्रवेश द्विरागमनानन्तर विवाह प्र-
करणं समाप्तम् ॥ २५ ॥ ॥ सौम्यायने विशाखायां कृत्तिका रोहिणी मृगे । उत्तरे-
रेवती ज्येष्ठा पुष्येऽग्न्याधान मिष्यते ॥ १ ॥ कुजेऽर्केऽब्जे गुरौ शुक्रे नो नीचास्तंगतेऽरिभे॥
नो रिक्तायां तिथौ कर्केलग्ने नैव मृगत्रये ॥ २ ॥ अग्न्याधानं प्रकुर्वीत नेन्दौ लग्नगतेऽपि
च ॥ त्रिकोणो पचये केन्द्रे सूर्य्य जीव कुजेन्दुषु ॥ ३ ॥ शेषे चोपचये शुद्धे रंध्रेऽग्न्याधा-
न मुत्तमम् ॥ लग्ने जीवे धनुर्गो वाद्यूने ७ खे १० वायमे कुजे ४ ॥ चन्द्रे वा त्रिषडायस्थे सूर्य्ये
वा दीक्षितो भवेत ॥ ५ ॥ इत्यग्न्याधानम् ॥ अथ राज्याभिषेकः ॥ उदितेऽब्जे गुरौ शुक्रे-
विचैत्रे चोत्तरायणे ॥ जन्मे शेवाकपिंगेशे रवौ भौमे बलान्विते ॥ १ ॥ रोहिणी द्वितये
पुष्ये ज्येष्ठायां उत्तरे तथा ॥ रेवती युगले हस्ते चित्रायां श्रवणेऽपि च ॥ २ ॥ तिथौवारे-
शुभेऽर्केऽपि कुर्याद्राज्याभिषेचनम् ॥ स्थिरे चोपचये लग्ने जन्मतो मस्तकोदये ॥ ३ ॥ शुभैर्यु-

क्षेक्षिते पापैः ऽपोष्टदृग्योगवर्जिते ॥ धनकेन्द्रत्रिकोणोगस्थै रहितैः पाप खेचरैः ॥ ४ ॥ सौम्यै
रव्ययगैः सर्वैर्व्ययमृत्युविवर्जितैः ॥ केन्द्रत्रिकोणगैः सौम्यैरसौम्यैः षट्त्रिलाभगैः ॥ ५ ॥
सुहृत्स्वर्क्षोच्चगैः खेटैर्नीचारातिभवर्जितैः ॥ राजयोगोचिते लग्ने शुभं राज्याभिषेचनम्
॥ ६ ॥ अथ युवराज्याभिषेकः ॥ युवराज्याभिषेकः स्यादभिषेकोक्तभादिषु ॥ ७ ॥ अथ
पुत्राभावेऽन्यस्याभिषेचनम् ॥ स्वजाते राज्ञि तत्स्थाने पुत्राभावे कुलोद्भवम् ॥ नो चिन्त्या-
स्तिथिवाराद्यास्तत्कालमभिषेचयेत् ॥ ८ ॥ अथ राजचिह्नधारणम् ॥ चामरछत्रदोला-
दिष्वपि सिंहासनादिकम् ॥ पट्टाभिषेकभे सर्वं विदध्याच्छोभनेऽहनि ॥ ९ ॥ इति श्रीम-
हैवज्ञरावलहरिशंकरसूरि॰ अग्न्याधानराज्याभिषेकयोः प्रकरणं समाप्तम् ॥ १६ ॥ अ-
थ यात्राप्रकरणम् ॥ विज्ञातजन्मनां राज्ञां ज्ञात्वा शुभफलोदयम् ॥ योज्या यात्रा बुधैः श-
स्तं प्रसादज्ञातजन्मनाम् ॥ १ ॥ अथ प्रश्नलग्नाद्यात्रायाः शुभाशुभफलम् ॥ जनुषो लग्न-
राशी वा लग्नेस्ते वा तदीश्वरे ॥ ताभ्यां चोपचये लग्ने तदा राज्ञां जयो ध्रुवम् ॥ २ ॥ जन्मतो लग्न- ११९
भे शत्रोस्तुर्ये ४ स्ते ७ वा तयोः पती ॥ ताभ्यामुपचयं भं वा जयः स्याद्वैरिसंभवः ॥ ३ ॥ जयो लग्ने-

स्वसद्दर्गे... वेच्छीर्षोदयेपिवा ॥ शुभयुक्तेक्षितेवापि शुभायात्रा चरोदये ॥ ४ ॥ स्थिरोदये भ
ग्नोनस्य । चतुर्भैर्हस्वयुते शुभः ॥ द्विस्वभावोदये पापैर्युक्ते वाथ निरीक्षिते ॥ ५ ॥ अस्थितो
पि निवर्तेत निर्जितोऽरिजनैः पुनः ॥ रम्ये भूमितले हृष्टे श्रुते भोगोल्पवस्तुनि ॥ ६ ॥ अत्यादे
धिवा प्रश्ने जयलाभोपियास्यतास् ॥ मृगो लग्ने १ बुधे तुर्ये ४ सहोत्थेऽ ३ र्के सुते गुरौ ॥ ७ ॥
लाभगे ११ रघरैः शत्रून् जित्वाऽभ्येति नृपो गृहे ॥ लग्ने १ भौमे यथवा मन्दे सुखे जीवेथ खे १० र
वौ ॥ ८ ॥ लाभे ११ कर्मणिवा १० चन्द्रे शुक्रेपि विजयो ध्रुवम् ॥ लग्ने भौमेन्दुयुक्ते वा दिनेशात्तनु
जेक्षिते ॥ ९ ॥ चन्द्रे वा निधनेऽस्तस्थे भास्करे लग्नवर्तिनि ॥ पापैर्वाद्यूनलग्नाद्ये हिबुकाय
गतैर्ग्रहैः ॥ ग्रामिश्चिमिश्च दुर्योगो. प्रष्टुर्भंगोन संशयः ॥ १० ॥ कोणो भौमाद्बुधेज्यार्कि शुक्रो वै
धु चतुर्ष्वपि ॥ एकश्चेद्गमनं नस्यात्तथाद्वा कोणगे विधौ ॥ ११ ॥ भवेद्धास्वदिशं सोत्रयः खेटो
बलवांस्तयोः ॥ प्रश्ने गन्त्य दिशाधीशात्पंचमोपि बली ग्रहः ॥ १२ ॥ अथ संक्रान्तिषु यात्राफ
लम् ॥ मेष १ सिंह ५ धनुः ९ संस्थेर्यात्राशस्ता शुभालिनि ॥ कुंभे ११ नक्रां ११ गना ६ युग्म ३ मु
क्रो संस्थे तु मध्यमा ॥ १३ ॥ कर्का ४ लि ८ मीनगे १२ र्केतु यात्रा दीर्घप्रवासदा ॥ १४ ॥ अथ दशादि

मु.ग. बलवशात्त्रिविधंयात्राफलंनन् ॥ दशादेःसफलेपाकेयात्राश्रेष्ठाथमध्यमा ॥ गोचरादिबले
१२१ न्यूनफलापंचांगशुद्धितः ॥ १५ ॥ अथयात्रायांचन्द्रतारातिथ्यादिशुद्धिः ॥ तारात्रिपञ्च-
सप्ताद्यारिक्तामापूर्णिमाष्टमी ॥ शुक्लाद्याद्वादशीषष्ठ्याहित्वाचन्द्रबलेगमः ॥ १६ ॥ अथ
यात्रायापृथक्तिथिफलानि ॥ कृष्णाचप्रतिपच्छ्रेष्ठानोशुक्लागमनादिषु ॥ द्वितीयाकार्य
सिध्यैस्यात्तृतीयाक्षेमसंपदे ॥ १७ ॥ चतुर्थीक्लेशदाज्ञेयालाभदापञ्चमीतथा ॥ व्याध्यार्ति
दायिनीषष्ठीसप्तमीभोग्यभोज्यदा ॥ १८ ॥ रोगदाचाष्टमीज्ञेयानवमीमृत्युदासदा ॥ दश-
मीलाभदानित्यंहेमदैकादशीस्मृता ॥ १९ ॥ प्राणाहृद्द्वादशीप्रोक्तासर्वसिद्धात्रयोदशी ॥ शु-
क्लाचतुर्दशीनेष्टाकृष्णाऽपक्षेविशेषतः ॥ २० ॥ पूर्णिमामध्यमाप्रोक्तात्याज्योदर्शस्तुसर्वथा
तिथीनांफलमेतद्धिज्ञातव्यंगमनेबुधैः ॥ २१ ॥ अथयात्रायांशुभाशुभवाराः ॥ सर्वेष्टवासरे
चेष्टचयस्यस्यापिवासरे ॥ यात्राश्रेष्ठाबुधेमध्यालोकेशास्त्रेतुनक्वचित् ॥ २२ ॥ अथवारेका-
लविशेषेयात्राकैश्चिदुक्ता ॥ रवौसूर्योदयेयायाद्बुधःकालेशनैश्चरे ॥ भौमेभुक्त्वासदाऽन्यत्र
वारेकैश्चिदितीरितम् ॥ २३ ॥ अथयात्रायामुत्तममध्यमनेष्टनक्षत्राणि ॥ धनिष्ठाश्रवणोहस्तो १२१

ऽनुराधा रेवती द्वयम् ॥ मृगः पुनर्वसुः पुष्यः श्रेष्ठान्येतानि भानि च ॥ २४ ॥ मूलं पूर्वात्रयं-
ज्येष्ठा रोहिणी शततारकाः ॥ उत्तराणां त्रयं याने मध्यान्येतानि भानि च ॥ २५ ॥ चि-
त्रात्रयं मघा श्लेषा कृत्तिकार्द्रा भरण्यपि ॥ वर्ज्यान्येतानि धिष्ण्यानि यात्रायां जन्म भं त-
था ॥ २६ ॥ अथ वर्ज्यनक्षत्राणामावश्यके त्याज्यघटिकाः ॥ पूर्वासु षोडशे वाद्या कृ-
त्तिकास्त्वेकविंशतिः ॥ मघास्त्वेकादश त्याज्या भरण्यां सप्त नाडिकाः ॥ २७ ॥ स्वा-
त्यां श्लेषा विशाखासु ज्येष्ठायां च चतुर्दश ॥ याया लग्नबले शेष नाड्योऽष्टावश्यके स-
ति ॥ २८ ॥ अथात्र मतांतरम् ॥ कृत्तिकाया मघा स्वात्योरेके पूर्वदलं जगुः ॥ उत्तरा-
र्धं तु चित्राया भरण्या श्लेषयोरपि ॥ २९ ॥ अथोशनःसोममतम् ॥ सर्वं स्वाती मघात्या-
ज्योशनःसोमतमीदृशम् ॥ ३० ॥ अथ नक्षत्रविशेषे विजययात्राप्रकारः ॥ संप्रस्था-
यानुराधायां स्थित्वा ज्येष्ठाभिधे ततः ॥ मूले गच्छेन्महीपालो यदि स्याच्च जयो ध्रुवम्
॥ ३१ ॥ हस्ते प्रस्थाय वा स्थित्वा तत्रैव स्वाति चित्रयोः ॥ विशाखायां व्रजन् भूपो विजयं 
लभते ध्रुवम् ॥ ३२ ॥ प्रस्थाय मृगशीर्षे वा स्थित्वार्द्रायां ततो व्रजेत् ॥ पुनर्वसौ महीपालो

मु.मा. लभते च जयश्रियम् ॥ ३३ ॥ रेवत्यां पुष्यभे वापि धनिष्ठायां महीश्वरः ॥ उषित्वा स्वी-
१२३ य शिविरे रात्रौ गच्छन् जयत्यरीन् ॥ ३४ ॥ अथ दिक्शूलम् ॥ दिक्शूलं पूर्वदिग्भागे ज्येष्ठा-
यां शनिसोमयोः ॥ पूर्वाभाद्रपदे याम्यां तथैव गुरुवासरे ॥ ३५ ॥ रवौ शुक्रे च रोहिणायां
पश्चिमायां त्यजेद्बुधः ॥ उदीच्यामुत्तराफाल्गुन्यभिधे मंगले बुधः ॥ ३६ ॥ अथ विदिक्
शूलं वारेषु ॥ आग्नेय्यां च गुरौ चन्द्रे नैर्ऋत्यां रविशुक्रयोः ॥ ईशान्यां चन्द्रजे वायौ मंगले
गमनं त्यजेत् ॥ ३७ ॥ अथ दिक्शूलदोषापनुत्तये विधिः ॥ सूर्ये घृतं पयश्चन्द्रे गुडं भौमे
बुधे तिलान् ॥ गुरौ दधि यवान् शुक्रे माषान्मन्दे नरस्तथा ॥ ३८ ॥ संप्राश्य यावश्यके गच्छ-
न दिक्शूलेन च दोषभाक् ॥ ताम्बूलं भास्करे चन्द्रे चन्दनं मंगले मृदः ॥ ३९ ॥ बुधे पुष्पं
दधीज्ये च घृतं शुक्रे तिलान् शनौ ॥ दत्वा भुक्त्वाथ धृत्वा वा न दोषः शूलयोगतः ॥ ४० ॥ अ-
थ समयविशेषे त्याज्यानि भानि ॥ पूर्वाह्णे रोहिणीक्षिप्राये विशाखा कृत्तिकोत्तराः ॥ मध्या-
ह्ने समये ज्येष्ठाश्लेषार्द्रामूलभं तथा ॥ ४१ ॥ अपराह्णे परित्याज्या गमने चाश्विनी सदा ॥ १२३
चित्रां त्यमनुराधां च यामिन्याः प्रथमेंऽशके ॥ ४२ ॥ मध्येंऽशके त्यजेत्पूर्वात्रितयं भरणी-

मघाग्रांत्ये पुनर्वसु स्वाती धनिष्ठा शततारकाः ॥ ४३ ॥ अथ सर्वकालं यात्रायां नक्षत्रा-
णि ॥ अश्वे पुष्ये मृगो हस्ते श्रेष्ठा यात्रा च सर्वदा ॥ ४४ ॥ अथ युद्धयात्रायां विशेषः ॥ राहुमु-
क्तानि ऋक्षाणि जीवपक्षस्त्रयोदशः ॥ मृतपक्षस्तु भोग्यानि कर्त्तरीतदधिष्ठितम् ॥ ४५ ॥
नतः पञ्चदशो ग्रस्तं चिंत्यं युद्धे गमादिषु ॥ जीवपक्षः शुभो ज्ञेयो मृतपक्षस्त्व शोभनः ४६
मृतपक्षाच्छुभं ग्रस्तं ग्रस्तभात्कर्त्तरी शुभा ॥ मृतपक्षे सहस्रांशो जीवपक्षे विधौ स्थिते ॥ ४७ ॥
यात्रायां विजयस्तत्र विपरीते पराजयः ॥ उभौ चेज्जीवपक्षस्थौ यात्रा तत्रापि शोभना ४८
वेंदु भौ मृत्युपक्षस्थौ रवींदू तत्र कष्टदौ ॥ पापिनो जयदश्चन्द्रो जीवपक्षे व्यवस्थितः ॥ ४९ ॥
भानुमान्जीवपक्षस्थः स्थापितो विजयावहः ॥ ५० ॥ अथाकुलकुलाकुलाकुलसंज्ञा-
स्त्रि विधास्तत्फलं च ॥ अथाऽकुलगणाः ॥ धनिष्ठा भरणी स्वाती हस्तोऽश्लेषा पुनर्वसुः
रोहिणी त्र्युत्तरं चांत्यानुराधे विषमा तिथिः ॥ ५१ ॥ सूर्येन्दु गुरु मंदाख्य वाराश्चैव गणो
ऽकुलः ॥ अत्र संप्रस्थितो राजा शत्रून् जयति संग्रामे ॥ ५२ ॥ अथ कुलगणाः ॥ पूर्वाश्वि- 
नी मघा पुष्यः कृत्तिका श्रवणो मृगः ॥ चित्राज्येष्ठा विशाखा चकुज शुक्रौ चतुर्दशी ॥ ५३ ॥

अष्टार्काश्विमितास्तिथ्यो गणोऽयं कुलसंज्ञकः ॥ संग्रामे यायिनो भंगः स्थायिनोऽत्र
जयो भवेत् ॥ ५४ ॥ अथ कुलाकुलगणाः ॥ अभिजिन्मूलमार्द्रा च शततारं बुधवासरः ॥ द्वि-
तीया दशमी षष्ठी कुलाकुलगणास्त्वयम् ॥ राज्ञः संग्रस्थितस्यात्र सन्धिर्भवति वैरिणाम्
॥ ५५ ॥ अथ नामादिवर्णवशान्नैसर्गिको वर्णस्वरः ॥ कच्छडाधभवानां स्यादकारोऽ-
वर्णजः स्वरः ॥ खजठानमशानां तु स्वर ईकार उच्यते ॥ ५६ ॥ गकृतापयशा वर्णा उकार
स्वरभाजिनः ॥ घढथाफरसा वर्णा एकारस्वरसंज्ञकाः ॥ ५७ ॥ चढदासमहाश्चैवा ओ-
कारः कथितः स्वरः ॥ नास्ति यश्चादिमो वर्णस्तद्दशाद्वर्णजः स्वरः ॥ ५८ ॥ अथ तिथि-
स्वरः ॥ अकारादि स्वराः पञ्च नन्दाद्यास्तिथयः क्रमात् ॥ निजस्वरतिथेर्ज्ञेया बलप्रभृ-
तयः स्वराः ॥ ५९ ॥ आद्यो बालः कुमारोऽन्यो युवा वृद्धस्तथा मृतिः ॥ ईषल्लाभकरस्त्वा-
द्यः कुमारस्त्वर्धलाभदः ॥ ६० ॥ सर्वसिद्धिं युवा कुर्याद्वृद्धो मध्योऽधमोऽतिमः ॥ ६१ ॥
अथ तात्कालिकस्वरः ॥ तिथेर्गतैष्ययोगस्थ यः स्यादेकादशांशकः ॥ तात्कालिकः
स्वरश्चासौ स्वावस्थातः क्रमात्स्मृतः ॥ ६२ ॥ अथ पथिराहुचक्रम् ॥ विशाखा पुष्यभाश्ले-

घाऽनुराधाश्विशताभिधम् ॥ धनिष्ठै तानि धर्मे स्युश्चकेऽस्मिन्पार्थिराङ्के ॥ ६३ ॥ भर-
णी श्रवणो ज्येष्ठा मघा स्वाती पुनर्वसुः ॥ पूर्वाभाद्रपदे तानि भान्यर्थे गदितानि च ॥ ६४ ॥
चित्रार्द्राकृत्तिकामूलपूर्वाफाल्गुनिकाभिजित् ॥ तथा भाद्रोत्तरै तानि कामेधिष्ण्यानि स-
प्त च ॥ ६५ ॥ उत्तरा फाल्गुनी हस्तो रोहिणी रेवती मृगः ॥ पूर्वाषाढद्वयं मोक्षे भान्ये तानि
बुधा जगुः ॥ ६६ ॥ धर्मर्क्ष संस्थिते सूर्य्ये चन्द्रो मोक्षार्थगः शुभः ॥ अर्थर्क्षे भास्करे चन्द्रः प्रश-
स्तो धर्ममोक्षगः ॥ ६७ ॥ सूर्य्ये कामर्क्षगे श्रेष्ठो मोक्षधर्मार्थगः शशी ॥ मोक्षधिष्ण्यस्थिते
सूर्य्ये चन्द्रमा धर्मगः शुभः ॥ ६८ ॥ अन्यथा त्वशुभो ज्ञेयो यात्रायां शुभमीप्सुभिः ॥ ६९ ॥
अथ यात्रायां गोरक्षकमते तिथिचक्रं तत्फलं च ॥ मासे शुक्लादिके पौषे तिथिः प्रतिप-
दादितः ॥ द्वितीयाद्यास्तु माघे स्युस्तृतीयाद्यास्तु फाल्गुने ॥ ७० ॥ एवं चान्येषु मासेषु
तिथ्यो द्वादशसंज्ञकाः ॥ लेख्याश्चक्रे त्रयोदश्याः संविहाय तिथित्रयम् ॥ ७१ ॥ तृतीया-
दित्रये यत्तत्त्रयोदश्यादिके फलम् ॥ मासेषु तिथिकोष्ठस्य तिथीनां क्रमतः फलम् ॥ ७२ ॥ 
याने प्राच्यादिकाष्ठासु वक्ष्ये द्वादशधा क्रमात् ॥ सौख्यं शून्यं धनार्तिश्च लाभः प्रीतिर्भयं धनम्

॥ ७३ ॥ कष्टं सौख्यं कलिर्मृत्युः शून्यं प्राच्यां फलं क्रमात् ॥ क्लेशौ नैः स्वं व्यथा सौख्यं द्रव्या-
प्तिर्लाभपीडने ॥ सौख्यं लाभो व्यथा लाभः सौख्यं याम्यदिशि ध्रुवम् ॥ ७४ ॥ भयं नैः स्वं प्रिया-
प्तिश्च भद्रं द्रव्यं मतिधनम् ॥ क्लेशो लाभोऽर्थसिद्धिः स्वं लाभो मृत्युश्च पश्चिमे ॥ ७५ ॥ धनं मिश्रं धनं
लाभो सौख्यं लाभो व्यथा सुखम् ॥ कष्टं द्रव्यत्वशून्यत्वं कष्टमुत्तरदिक्फलम् ॥ ७६ ॥ अथ सर्वा-
कयोगफलम् ॥ तिथिनक्षत्रवारैक्यं सप्ता ७ ष्टा ८ ग्नि ३ विभाजितम् ॥ आदिशून्येतिपीडा स्या-
न्मध्यशून्ये भयं तथा ॥ ७७ ॥ शून्येऽन्त्ये वसुषो रोगो मृत्युः शून्यत्रये ध्रुवम् ॥ जय आर्यागमः
सौख्यं शेषे च स्थानकत्रये ॥ चिन्त्यमेतद्धि यात्रादौ शुक्लाद्यास्तिथयोऽत्र तु ॥ ७८ ॥ अथा-
डलभ्रमौ त्याज्यौ ॥ रविभात्साभिजिच्चान्द्रे सप्त ७ भिर्ह्यं २ द्रि ७ शेषके ॥ आडलोथ त्रि ३ षट्
६ शेषे गमो नेष्टागमे त्विमौ ॥ ७९ ॥ अथ प्रशस्तो हैवरयोगः ॥ चन्द्रभं सूर्य्यभाद्युक्तं पक्षा-
दितिथिवासरैः ॥ नवाप्तं सप्त शेषे तु हैवरः स्याच्छुभागमे ॥ ८० ॥ अथ घमाडाख्यः शुभ-
योगः ॥ रविभाच्चान्द्रभं त्रिघ्नं ३ तिथि १५ युगसप्तभाजितम् ॥ घमाडस्तु त्रिशेषे स्याद्गमने श्रे-
ष्ठ ईरितः ॥ ८२ ॥ अथ घातचन्द्रः ॥ जन्मस्थो मेषराशेः स्याद्वृषभस्य तु पञ्चमः ॥ नवमो ॥

१२७

| पौ | मा | फा | चै | वै | ज्ये | आ | श्रा | भा | आ | का | मा | पूर्वे. | दक्षिणे | पश्चिमे | उत्तरे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | सौख्य | निःस्वं | भीतिः | अर्थागमं |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | शून्यं | दुःखं | निर्धनं | सिद्धं |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | क्लेशः | सौख्यं | दूरं | धनं |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | लाभः | प्राप्तिः | भगं | वित्तलाभः |
| ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | लाभः | लाभः | धनम् | सौख्यं |
| ६ | ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | भयं | कष्टम् | मरणम् | द्रव्यागमः |
| ७ | ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | लाभः | सौख्यं | द्रव्यम् | क्षतिदुःखं |
| ८ | ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | कष्टं | लाभः | क्लेशः | सुखम् |
| ९ | १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | सौख्यं | कार्य सि० | कार्यम् | कष्टम् |
| १० | ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | क्लेशः | लाभः | द्रव्यलाभः | धनागमः |
| ११ | १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | मृत्युः | सौख्यं | द्रव्यनाशः | शून्यम् |
| १२ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | शून्यम् | सौख्यम् | मरणम् | कष्टम् |

मिथुनस्येन्दुर्द्वितीयः कर्कटस्यच ॥ ८२ ॥ षष्ठस्तु सिंहराशेश्च कन्यायादशमः स्मृतः ॥ तृती-
यस्तु तुलाराशेर्वृश्चिकस्य च सप्तमः ॥ ८३ ॥ चतुर्थो धन्विनो ज्ञेयो मकरस्याष्टम स्तथा ॥ कुं-
भस्यैकादशः प्रोक्तो मीनस्य द्वादशः स्मृतः ॥ ८४ ॥ घात चन्द्राङ्गसे वर्ज्या यात्रायां राज दर्शने
विवाहे वाहना रोहे युद्ध भैषज्य सेवने ॥ विवाहादि शुभे ऽन्यत्र नैते चिन्त्या मनीषिभिः ॥
८५ ॥ अथ घात नक्षत्राणि ॥ मेषे मघा वृषे हस्तो मिथुने स्वाति रुच्यते ॥ कर्कटे चानु-
राधा स्यं सिंहे मूलं प्रकीर्तितम् ॥ ८६ ॥ कन्यायां श्रवणो ज्ञेयस्तुलायां शत तारका ॥
वृश्चिके रेवती धिष्ण्यं भरणी धनुषिस्मृता ॥ ८७ ॥ मकरे रोहिणी कुम्भे चार्द्रा श्लेषा-
तु मीनभे ॥ एतानि घात धिष्ण्यानि जन्म राशौ नरस्य च ॥ ८८ ॥ अथ घात वाराः ॥
मेषे रविर्बुधः कर्के मिथुने चन्द्र एवच ॥ कन्या वृषभ सिंहेषु शनिः स्यान्मकरे कुजः ८९
धनुर्वृश्चिक मीनेषु शुक्रोथ तुल कुम्भयोः ॥ जीव श्चैते जन्म राशौ घात वारा बुधैः स्मृताः ९०
अथ घात तिथयः ॥ मेष वृश्चिकयोर्नन्दा भद्रा मिथुन कर्कयोः ॥ कन्या वृषभ मीने तु पू-
र्णा घात तिथिः स्मृता ॥ ९१ ॥ अथ घात तिथीनां त्याज्य घटिकाः ॥ कार्य्येत्वावश्य २२९

 केनाडीषट्कं घात तिथौ बुधैः ॥ आदिमंशं परित्यज्य नो निंद्याः शेष नाडिकाः ॥ ९२ ॥
 अथावश्यके घात चन्द्रस्य नक्षत्र पादास्त्याज्याः ॥ मेषेतु कृत्तिकाद्येंऽघ्रि १ वृषे चित्रा 
द्वितीयकः २ ॥ युग्मे शते तृतीयों ३ घ्रिर्मघाया अपिकर्कटे ॥ ९३ ॥ धनिष्ठाद्य १स्तथा
सिंहे त्रय स्त्वार्द्रा तृतीयकः ३ ॥ तुले मूल द्वितीयोंऽघ्रि २ रलो चाहे स्तृतीयकः ३ ॥ ९४ ॥
पूभा तुर्य धनुः सिंहे मघा तुर्यो ४ मृगे तथा ॥ कुम्भे मूल चतुर्थोंऽघ्रि ४ मीने पूभा तृतीय-
कः ३ ॥ ९५ ॥ त्याज्या घात विधौ चोक्त पादा आवश्यके बुधैः ॥ ९६ ॥ अथ रव्यादयो
घात ग्रहाः ॥ अथ घात सूर्य्याः ॥ वेदे ४ भा ८ र्का १२ ऽनन्दे ९ न्दु १ रस ६ दिक् १० शैल ७
संमिताः ॥ रुद्र ११ नेत्राऽ २ ग्नि ३ संख्या अ घात सूर्य्यास्त्विमेऽजतः ॥ ९७ ॥ अथ घात
चन्द्राः प्रसंगात्पुनरपि ॥ इंदु १ बाणां ५ क ९ नेत्रां २ गा ६ दि १० गाग्नि ३ नगा ७ संख्यकाः ॥ वेदा ४ ष्टे ८ शा ११
र्के १२ संख्याका मेषाद्घातेंदवः क्रमात् ॥ ९८ ॥ अथ घात भौमाः ॥ बाणां ५ कें ९ न्दु १ रसा ६ शा १० ह-
 क् २ शैल ७ रुद्रे ११ भ ८ संमिताः ॥ सूर्य्या १२ ग्न्य ३ ब्धि ४ मिता मेषात्क्रमाद्घातधरात्म-  
जाः ॥ ९९ ॥ अथ घात बुधाः ॥ नेत्रां २ गा ६ शा १० ग्नि ३ शैले ७ शा ११ वेदा ४ ष्टे ८ ष्वं ५ कं ९

संमिताः ॥ द्वादशे १२ न्दु १ मिताघात बोधनाः क्रमतस्त्वजात ॥ १०० ॥ अथ घात गुरवः ॥
रसा ६ शा १० नेत्र २ शैलेशा ११ वह्नि ३ नागा ८ र्क १२ संमिताः ॥ नन्दे ९ द्वन्द्वी १४ षु ५
संख्यास्ते घातेज्यामेषतः क्रमात ॥ १०१ ॥ अथ घात भृगवः ॥ शैल ७ दि १० ग्वह्नि ३
नागा ८ र्क १२ वेद ४ नन्दे ९ न्दु १ भिर्मिताः ॥ आशा १० शिव २ बाणां ५ ग ६ संख्या घात-
शुक्रास्तु मेषभात ॥ १०२ ॥ अथ घात शनयः ॥ वह्नि ३ शैले ७ श ११ वेदा ४ ष्ट ८ सूर्य्यं-
१२ बाणां ५ क ९ षगिम ६ ताः ॥ दि १० गिन्दु १ नेत्र २ संख्यास्ते मेषाद्घात शनैश्चराः १०३
अथ स्त्रीणां घात चन्द्राः ॥ सू १ नागा ८ श्वां ७ क ९ वेदा ४ ग्नि ३ रसा ६ ख्वा २ शा १० शिवं-
११ षु ५ भिः सूर्य्यै १२ श्च प्रमिता मेषाद्घात चन्द्रा मृगीदृशाम ॥ १०४ ॥ अथ चन्द्र वामस्त-
त्फलम ॥ मेष सिंह धनुः संस्थः पूर्वस्यां दिशि चन्द्रमाः ॥ दक्षिणस्यां वृषे नित्यं कन्या
मृगमनकराः ॥ १०५ ॥ तुला मिथुन कुम्भस्थः पश्चिमायां निशाकरः ॥ कर्क वृश्चिक मी-
नेषु गतालिश्चे त्तथांतरे ॥ १०६ ॥ सन्मुखे ऽङ्गे ऽर्थलाभः स्यात्सुखं सं पश्चदक्षिणे ॥ पृष्ठगे १३१
निधनं यातु र्वामभागे वसुक्षयः ॥ १०७ ॥ चन्द्र वासस्त्वयं प्रोक्तो दिशो राश्यनुसारतः ॥ लो-

काह्वाव्यवहाराय मूलं तस्य विचिन्त्यताम ॥ १०८ ॥ अथावश्यके एकस्मिन्नपि राशौ
घटिकात्मकं चन्द्रवासश्चतुर्दिक्षु केचिदुक्तः ॥ नाड्यः सप्तदश प्राच्यां याम्यां तिथिमि-
तास्ततः १५ ततः स्वर्गमिताः २१ प्रत्यगुत्तरस्यां तु षोडश १६ ॥ १०९ ॥ पुनः सप्तदश प्रा-
च्यां दक्षिणस्यां चतुर्दश १४ पश्चिमे नखसंख्या २० स्ता उदीच्यां पंचभू १५ मिताः ॥ ११० ॥
वासद्वयं भूमश्चेन्द्रोः स्ववासस्यानतः क्रमात् ॥ एकराशिस्थितोपीहतद्दिशाजं फलं दिशे-
त् ॥ १११ ॥ अथ योगिनी वासः ॥ नवमी प्रतिपत्तिथ्योः प्राच्यान्तिष्ठति योगिनी ॥ अग्नि
कोणे तृतीयायामेकादश्यां तथैव हि ॥ ११२ ॥ त्रयोदश्यां च पञ्चम्यां दक्षिणस्यां तु यो-
गिनी ॥ द्वादश्यां नैर्ऋते ज्ञेया चतुर्थ्यामपि सर्वदा ॥ ११३ ॥ चतुर्दश्यां च षष्ठ्यां च पश्चि-
मायां दिशि ध्रुवम् ॥ वायुकोणे तु सप्तम्यां पूर्णिमायां तथैव च ॥ ११४ ॥ योगिन्युत्तरदिग्भा-
गे द्वितीया दशमी दिने ॥ अमायां च तथाष्टम्यामीशान्यां योगिनी भवेत् ॥ ११५ ॥ योगिनी
सन्मुखे द्यूते गमे युद्धे च मृत्युदा ॥ अशुभा वामभागस्या पृष्ठे दक्षे जयप्रदा ॥ ११६ ॥ अथ ता-
त्कालिक योगिनी ॥ प्राच्युत्तराग्निनैर्ऋत्ययाम्यां पश्चिमवायुषु ॥ ईशान्यां योगिनी गच्छे

त्वदेशाः कथितः क्रमात् ॥ ११७ ॥ यामार्धं भोगकाले ऽस्यास्तिथौ द्विश्रयणां सदा ॥
योगिनी चैवया जयदा पृष्ठदक्षिणे ॥ ११८ ॥ अथ कालवासः ॥ उत्तरस्यां रवेर्वारे वायौ चन्द्रदिने
भवेत् ॥ भौमवारे प्रतीच्यां तु नैरृत्यां बुधवासरे ॥ ११९ ॥ यमाशायां गुरोर्वारे वह्नेर्दिशि भृगोर्दिने
दिने ॥ प्राच्यां दिशि शनेर्वारे कालः प्रोक्तो मनीषिभिः ॥ १२० ॥ कालस्याभिमुखः पाशौ वैपरी-
त्यं तयोर्निशि ॥ तावुभौ सन्मुखौ त्याज्यौ वामदक्षिणगौ शुभौ ॥ १२१ ॥ अथ यामार्द्धात्मकश्च
द्विविधो राहुः ॥ पूर्वाह्णे दिवापरा रात्रौ षष्ठी षष्ठीं दिशां ततः ॥ यामार्धं भ्रमती शाना चुर्या तुर्यो-
घटिद्वयम् ॥ १२२ ॥ एतदेव स्पष्टयति ॥ अथ दिवार्धयाम राहुः ॥ सद्भुर्य्यामार्धमानेन या-
ति सूर्य्योदयात्क्रमात् ॥ शक्रवायुयमेशांबुवह्निग्लौरक्षसां दिशि ॥ १२३ ॥ अथ रात्रावर्ध-
याम राहुः ॥ रात्रौ वरुणाग्नीन्दूरक्षः शक्रमरुद्दिशि ॥ याम्यां शैवदिशि प्रोक्तो भ्रमो या-
मार्धमानतः ॥ १२४ ॥ अथ मुहूर्तात्मक राहुः ॥ ईशांतकमरुच्छक्ररक्षश्चन्द्रानलांभसा-
म् ॥ दिशि भ्रमत्यसुर्नाडीद्वयमाना दिवानिशम् ॥ १२५ ॥ ज्ञेयोत्र षोडशांशास्तु मुहूर्तोयं-
दिवानिशम् ॥ १२६ ॥ अथ राहुफलम् ॥ द्विविधः पृष्ठगो राहुः शुभदो दक्षिणोपि च ॥ सचे- 

द्योगिनिका युक्तस्तदा युद्धे जयो ध्रुवम् ॥ १२७ ॥ वामगाः सन्मुखस्त्याज्यो यत्ना द्युद्ध शुभे-
प्सुना ॥ १२८ ॥ अथ परिघ दराडः ॥ कृत्तिकात श्चतुर्दिक्षु सप्त सप्त च पूर्वतः ॥ परिघं लंघ-
येन्नैव वायव्यानल दिग्गतम् ॥ १२९ ॥ अथ परिघे विदिङ्निर्णयः ॥ पूर्वदिग्द्वार भैर्य्यायां या-
हिशा मग्नेः प्रदक्षिणाम् ॥ विदिक्ष्वेवं तयान्यासु जयेप्सुर्नृपतिः सदा ॥ १३० ॥ अथावश्य-
के परिघोल्लंघनम् ॥ कृत्ये चावश्यके गच्छे ल्लिलंघ्य खलु पारिघम् ॥ त्यक्त्वा शूलं यदा शु-
द्धि र्दिग्लग्नस्य तदा नृपः ॥ १३१ ॥ अथ सर्व दिग्गमने श्रेष्ठा निभानि ॥ पुष्य हस्ता नुरा-
धाश्चे सर्व दिग्गमनं शुभम् ॥ १३२ ॥ अथ वक्र ग्रहस्य वारादित्याज्यम् ॥ ग्रहः केन्द्रगतो
वक्री लग्नं वा वक्रि वर्गगम् ॥ वक्रि खेटस्य वारे वा तत्र यातु र्विनाशनम् ॥ १३३ ॥ अथा-
नुकूलम् ॥ दिवा सौम्यायने सूर्य्ये याया दुत्तर पूर्वयोः ॥ चन्द्रे सौम्यायने रात्रौ प्रोक्ता यात्रा
तयोर्दिशोः ॥ १३४ ॥ सूर्य्ये याम्यायने गच्छे त्प्रत्यग्दक्षिणा योर्दिवा ॥ दिशायोस्त्वेतयोश्च-
न्द्रे रात्रौ याम्यायने गते ॥ १३५ ॥ उभौ सौम्यायने यायात्तदा चोत्तर पूर्वयोः ॥ तौ चेद्याम्या- 
यने प्रत्यग्याम्ययोस्तु दिवा निशम् ॥ १३६ ॥ अन्यथा गमने न्हणां भवेद्बंधो वधोपिवा ॥

॥१३७॥ अथ त्रिविधः प्रतिशुक्रः॥ यत्रोदेति भृगुर्यत्रा त्तां दिशां सन्मुखीं त्यजेत्॥ भार्ग-
वाधिष्ठितो राशिर्दिशि वा यत्र लग्नतः॥ १३८ ॥ कृत्तिकादिषु दिग्द्वार भेषु यत्र स्थितो ऽ १३०
ऽथवा ॥ त्याज्या सापि दिशा यस्मात्सं मुख स्त्रिविधो भृगुः ॥ १३९ ॥ अथ प्रति शुक्र दोषा
पवादः॥ रेवत्यां मेषगे चन्द्रे भवत्यंधो भृगोः सुतः॥ यात्रादौ नैव दोषाय सन्मुखो दक्षिणो
पि वा ॥ १४० ॥ भृग्वादि गोत्रजातानां न दोषः प्रतिशुक्रजः ॥ १४१ ॥ अथ गमने शुक्रस्या-
स्तादि दोषः ॥ नक्र नीच गतैः खेटैर्जिते चास्तगते भृगौ ॥ योगाच्छेत्स वशं याति प्रबलोपि
द्विषां न्नृपः ॥ १४२ ॥ अथ बुधोपि सन्मुख स्त्याज्यः॥ अनुकूले बुधे यायादित्थं भूतेपि भा-
र्गवि॥ सम्मुखस्थे बुधे सर्वे तथा खेटाः शुभा अपि॥ १४३॥ अथ सामान्ययात्रायां प्रतिशुक्रादि दोषाभा
वः॥ नृणां प्रथम यात्रायां प्रतिशुक्रादि दूषणम्॥ जयार्थिनो नृपस्यापि नान्येषां तु कदाचन॥ १४४॥ अथा
वश्यक तीर्थयात्रायां च न दोषः॥ अर्धोदयो परागादौ पुण्ययोगे सुदुर्लभे ॥ तीर्थार्थी तु सुखं याया-
१३० त्कालेप्यस्तादिकेष्वपि ॥ १४५ ॥ अथ मार्गे शुक्रास्तादौ तत्रैव स्थितिः ॥ मध्य मार्गे तु यात्रा १३५
यां भृगावस्तेथ सन्मुखे ॥ तावत्कालमुषित्वा च शुभ काले व्रजेन्नृपः ॥ १४६ ॥ अथयात्रा-

यांलग्नविचारः ॥ तत्रादौत्याज्य लग्नानि॥कुम्भलग्ने च कुम्भांशेन गच्छेत्सर्वथान्नृपः ॥
मीने मीनांशके यातुः पंथा वक्रो धनक्षतिः ॥ १४७ ॥ निषिद्धा गमने कैश्चिन्मीन वृश्चिक
कर्कटाः ॥ लग्नस्था वा नवांशस्थाः प्रोक्ता राज्ञां जयार्थिनाम् ॥ १४८ ॥ भूभुजां जन्मल
ग्नाद्वा जन्मराशेश्च लग्नगे ॥ निधने निधनांशे वा गमनं निधनाय वै ॥ १४९ ॥ वैरिराशौ
जन्मराशेस्तु रिपुभे वा तदीश्वरः ॥ यात्राकाले विलग्नस्थे सापि यात्रा विघायते ॥ १५० ॥
अथ शुभलग्नानि ॥ जन्मराशीश्वरो जन्मलग्नेशो वा शुभग्रहः ॥ तौ विलग्नगतौ वात
द्राशिलग्ने शुभागमः ॥ १५१ ॥ लग्ने वर्गोत्तमे वेंदौ यात्रोक्ता कार्य्यसिद्धये ॥ अम्भोराशौ
तदंशे वा नौकायानं प्रशस्यते ॥ १५२ ॥ जनौघः शुभयुग्राशिर्वेशिसंज्ञोथवा भवेत् ॥ स्वा-
रिभान्निधनस्थो वा स राशिर्लग्नगः शुभः ॥ १५३ ॥ अथ शीर्षोदये लग्ने यात्रा सर्वार्थ-
दायिनी ॥ राजयोगोचिते लग्ने प्रशस्ता वसुधाभुजाम् ॥ १५४ ॥ अथ दिग्द्वाराशयः ॥ मेषा
दिराशयो दिक्षु च तत्स्वपि पूर्ववत् ॥ पूर्वतस्त्रिक्रमाद्राशयः प्रोक्तो दिग्द्वारसंज्ञकाः १५५



लग्ने दिग्द्वारराशिस्थे यात्रा स्याज्जयकारिणी ॥ प्रतिलोमे तु विघ्नार्त्तिकारिणी भंगदा-

 यिनी ॥ १५६ ॥ अथ दिगीशाः ॥ रविः शुक्रः कुजो राहुः शनिश्चन्द्रो बुधो गुरुः ॥ पूर्वादीनां
 क्रमादेते दिशामीशाः प्रकीर्तिताः ॥ १५७ ॥ अथ लालाटी ॥ दिगीशः स्वीयदिक्संस्थो । १८
लालाटी कथितो ग्रहः ॥ लग्नादौ सन्मुखस्त्याज्यो गमे मृत्युकरो यतः ॥ १५८ ॥ अथ दिगीशे अन्य-
केन्द्रगे शुभं फलम् ॥ दिगीशे केंद्रगे गच्छेन्न तु लालाटगे क्वचित् ॥ १५९ ॥ अथ लालाटस्पष्टीकरणम्
प्राच्यां लग्नगते सूर्ये शुक्रे चायगतेऽनिले ॥ भौमे कर्मगते याम्यां रन्ध्रेऽङ्के ८।९ राहौ च नैर्ऋते ॥ १६० ॥
शनौ द्यूने ७ च वारुण्यां वायौ पुत्रारिगे ५।६ विधौ ॥ बुधे तुर्ये ४ तथोदीच्यामीशान्यां द्वि-
त्रिगे गुरौ ॥ १६१ ॥ इत्थं लालाटगे खेटे सन्मुखे गमनं त्यजेत् ॥ १६२ ॥ अथोक्तसमये ल-
ग्नाद्यलाभे उक्तान्यदिक्षु प्रशस्ता यात्रा ॥ उषःकालं विना प्राचीं याम्यां याने विनाऽभिजित् ॥
निशीथस्तु विनोदीचीं गोधूलिर्वारुणीं विना ॥ १६३ ॥ अथ यात्रायां श्रेष्ठा नेष्टाश्च ग्रहाः ॥
हित्वा सप्तमगं शुक्रं केन्द्रकोणे शुभाः शुभाः ॥ पापास्त्र्यायचये शस्ता याने नो दशमः शशी
१८ ॥ १६४ ॥ चन्द्रस्तु गमने नेष्टो लग्नारिव्ययरन्ध्रगः ॥ द्यूने षष्ठाष्टरिष्फस्थो लग्नेशोऽपि- १३७
न शोभनः ॥ १६५ ॥ सुरेशस्याहितो लग्ने सबलेशोऽपि न शोभनः ॥ पापोऽपि चेत्सुहृत्तस्य-

तनौ भाव्यफलप्रदः ॥ १६६ ॥ जनते जन्मलग्नेशाज्जन्मराशीश्वरोदये ॥ सुहृच्चेत्कर्मगः
खेटो नष्टोपीष्टो विलग्नतः ॥ १६७ ॥ अथ यात्रायां योगप्रशंसा ॥ वक्ष्यमाणैः शुभैर्योगै
र्यात्रा सिद्धा महीभुजाम् ॥ भूदेवानां तु सद्दक्षैश्चौराणां शकुनैर्भवेत् ॥ १६८ ॥ विधायते
ऽमृतं योगा विषमप्यमृतायते ॥ विहाय स्वं फलं खेटा दद्युस्तद्योगजं फलम् ॥ १६९ ॥
तिथिवासरयोगेषु लग्नेन्दुकरणोडुषु ॥ दुष्टेष्वपि शुभा यात्रा योगैरुक्ता मनीषिभिः ॥
१७० ॥ अथ योगाः ॥ लग्ने १ गुरौ रिपौ ६ भौमे लाभे ११ र्के सहजे ३ शनौ ॥ जयत्याशुरि
पून्याने ऽनुकूलो यदि भार्गवः ॥ १७१ ॥ लग्ने १ गुरौ बुधे तुर्ये ४ खे १० ज्ञे भ्रातृ ३ गते रवौ
सुते ५ शुक्रे रिपौ ६ भौमे मन्दे यात्राऽतिशोभना ॥ १७२ ॥ गुरौ लग्ने १ ष्टमे ८ चन्द्रे षष्ठे ६
सूर्ये जयत्यरीन् ॥ तनौ १ जीवेथवा शौरे वित्ता २ य ११ स्थैर्जयो गमे ॥ १७३ ॥ लग्ने १ सूर्ये
विधौ द्यूने ७ धन २ स्थैर्ज्ञेज्य भार्गवैः ॥ प्रयाति नृपतिः सोरीन् जयेत्तार्क्ष्य इवोरगान् ॥ १७४ ॥
वित्तेर्के वित्तगे लग्ने भार्गवे यायिनां जयः ॥ लग्नेर्के वा शनौ षष्ठे खेऽ १० ज्ञे गच्छन्नरीन् जये २३८
त् ॥ १७५ ॥ मन्दे कुजे तनौ १ खेऽ १० र्के शुक्रे च विद्विलाभगे ११ ॥ संव्रजन् भूपतिः शत्रून् विजि-

मु॰ग॰ त्यश्रियमश्नुते ॥ १७६ ॥ मन्दारौ त्रियडायस्थौ बलिनोऽन्त्यभार्गवा: ॥ प्रयाणे भूपतेर्य-
१३९ स्य वसुधा तस्य हस्तगा ॥ १७७ ॥ लग्ने जीवे विधौ द्यूने ७ चतुर्थे ज्ञे तथा भृगौ ॥ पापैस्त्रिगे- ।र॰१
महीपाल: प्रस्थितो लभते श्रियम् ॥ १७८ ॥ लाभे ११ र्के खे १० बुधे शुक्रे दुश्चिक्ये ३ भूमिजे-
शनौ ॥ द्यूने ७ ज्ञे तनुगे १ जीवे प्रस्थितस्य भवेज्जय: ॥ १७९ ॥ लग्नेऽ१ ब्जे वागुरौ षष्ठे ६ ।
सूर्ये व्योम १० गते शनौ ॥ सुते ५ ज्ये हिबुके ४ शुक्रे राजा हंति गमे रिपून् ॥ १८० ॥ बलिनींदु-
सुते लग्ने १ केन्द्रे १।४।७।१० जीवे थ निर्बले ॥ त्रिषष्ठान्त्यकगे ३।६।१२। चन्द्रे सं व्रज-
न् श्रियमाप्नुयात् ॥ १८१ ॥ शुक्रे तुर्ये त्रिलाभ ४।३।११ स्थे केन्द्रस्थ १।४।७।१० गुरुवी-
क्षिते ॥ सप्ताष्टांक ७।८।९ गतै: पापैर्योगोऽयं बहुलाभद: ॥ १८२ ॥ शुभैर्दशे बुधे व्योम १०
रिपु ६ लग्न १ तुरीय ४ गे ॥ योगोऽयं जयद: पापैर्द्यून ७ लग्नां १ त्य १२ वर्जितै: ॥ १८३ ॥ ई-
ज्ये लग्ने १ ख लाभस्थै: ११ पापै राज्यागमो भवेत् ॥ द्यूने ७ वा वा धने शुक्रे तुर्ये ४ ब्जे प्रोक्तव-
र॰१ त्फलम् ॥ १८४ ॥ षडाद्याष्ट ६।१।८ गतै: शुक्रजीवाब्जैर्गमने जय: ॥ तुर्ये ४ वोशनसि प्रो- १३९
क्तं ज्ञे च मन्दे पि तत्फलम् ॥ १८५ ॥ बुधभार्गवयोरंतर्याति कुमुदबांधवे ॥ तुर्य ४ स्थे ब्जे जयत्या-

शुभगमनेऽरीन्नरेश्वरः ॥ १८६ ॥ लग्नास्तार्यं बुवह्नि १।७।६।४।३ स्थैः शुक्रेज्यारबुधार्कजैः
योगोयं क्रमतः प्रोक्तोगमने जयदो बुधैः ॥ १८७ ॥ षड्द्रिखारीन्दुवेदेश ६।३।१०।६।१।४।११
संस्थितैस्तपनादिभिः ॥ गोचरैः क्रमतो जीववारे योगोयमुत्तमः ॥ १८८ ॥ जीवेंगे १ र्के रिगे ६
सौम्ये त्रि ३ गेरंध्र ८ गते भृगौ ॥ ज्ञेद्यूने ७ च शुभा यात्रा भूभुजां जयदायिनी ॥ १८९ ॥ शुक्रार्के-
ज्ये स्त्रितुर्य्य ३।४ स्थैः शत्रु ६ स्थे मन्दभूमिजे ॥ यात्रा भूमिभुजां शस्ता शत्रुवृन्दविदारिणी ॥
१९० ॥ नवांशाङ्गेश संयुक्ता दंशे शतम संस्थिते ॥ गुरौ वा भार्गवे यात्रा शत्रुसंघविदारिणी
॥ १९१ ॥ शतांशादूर्ध्वगे चेन्दौ भास्करात्मजभौमयोः ॥ यात्रायां नृपतिर्हंति विद्विषां मह-
तीं चमूम् ॥ १९२ ॥ शुक्राद्राहुरोर्वापि मन्दांकोत्तरऋक्षगे ॥ योधनं गमने राजा जयेच्चैव
द्विषद्बलम् ॥ १९३ ॥ नैरंतर्येण खेटाश्चेद्व्यर्कस्थानेषु पंचसु ॥ संस्थिताः पृष्ठदिग्भागेया-
ने राज्ञां जयप्रदाः ॥ १९४ ॥ अथ योगाधियोगयोगाधियोगाः ॥ बुधेज्यभृगुपुत्राणां मे-
कश्चेत्केन्द्र १।४।७।१० कोण ५।९ गः ॥ तदा योगोत्र गमने क्षेमो भवति भूभुजाम् ॥ १९५ ॥ 
अधियोगो भवेद्द्वाभ्यामत्र क्षेमजयो ध्रुवम् ॥ त्रिभिर्योगाधियोगोऽत्रयशः क्षेमधनागमः

॥ १९६ ॥ अथ मितं समं बृहदिति त्रिविधं गमनं ॥ प्रमाणं मित संज्ञं तद्यावद्द्वादशयोजनम्

ततोऽधिकं समं यावत्पञ्चविंशति योजनम् ॥ १९७ ॥ अत ऊर्ध्वं बृहत्प्रोक्तं खंडावधि बुधै-
रिदम् ॥ योगिनी शूल पंचांग काल जांस्तु मिते गमे ॥ १९८ ॥ समे तु तैः समं दोषाल्लग्नजा-
नपि संत्यजेत् ॥ दोषान् प्राक्कथितान् योगयात्रोत्थांश्च बृहद्गमे ॥ १९९ ॥ अथ विजयदश-
म्याः प्रशंसा ॥ आश्विने दशमी शुक्ला विजया सर्व सिद्धिदा ॥ श्रवणेन युता ऽत्यंत जय-
दा नृपतेर्गमे ॥ २०० ॥ अथ चित्तोत्साहादि प्राशस्त्यम् ॥ प्रसादश्चेतसः श्रेष्ठैर्निमित्तैः श-
कुनैः शुभैः प्राप्य लग्नबलं राज्ञां गच्छतो विजयो ध्रुवम् ॥ २०१ ॥ चेतो विशुद्धिः प्रबला-
निमित्ताच्छकुनादपि ॥ सत्यामस्यां मतौ यायान्नैव यायात्तु तां विना ॥ २०२ ॥ अथ या-
त्रायां शाकुनादि प्राशस्त्यम् ॥ यात्रायां शाकुनं जीव उषो गर्गः प्रशंसति ॥ अंगिरा मान-
सोत्साहं विष्णुर्वाचं द्विजन्मनाम् ॥ २०३ ॥ अथोत्सवाद्य समाप्तौ यात्रा न कार्य्या ॥ प्रतिष्ठो-
द्वाह मुत्साहं व्रतं चौलं च सूतकम् ॥ असमाप्य न गंतव्य मार्तवं योषितामपि ॥ २०४ ॥ अथ १४१
काल वृष्टि दोषः ॥ अकाले वर्षणे विद्युद्दर्शने गर्जितेपि वा ॥ सप्तरात्रं न गंतव्य मुत्पाते च

शुभेप्सुभिः ॥ २०५ ॥ अकालवर्षणं प्रोक्तं पौषान्मास चतुष्टये ॥ भूयान्दोषो महा वृष्ट्या
मल्पो दोषो ऽल्पवर्षणे ॥ २०६ ॥ न दोषो वृष्टिजस्तावद्यावद्भूर्न पदांकिता ॥ अकालेवर्षणे
जाते कृत्येत्यावश्यके त्यजेत् ॥ २०७ ॥ त्र्यहं पौषे द्व्यहं माघे दिनमेकन्तु फाल्गुने ॥ चैत्रे घटी
द्वयं दोषो ना ऽयं गर्भसमुद्भवे ॥ २०८ ॥ अथा काल वृष्टि दोष परिहारः ॥ सूर्य्य चन्द्रमसो बिं-
बे कृत्वा हेममये तदा ॥ तदा भूमिपतिर्यायात्कार्येत्यावश्यके सति ॥ २०९ ॥ अथैकस्मि-
न्दिने यात्रा प्रवेशयोर्विचारः ॥ ग्रामाद्ग्रामांतरं राजा यद्येकस्मिन्दिने व्रजेत् ॥ तदा वारर्क्ष-
सूलादि प्रतिशुक्रेन चिन्तयेत् ॥ २१० ॥ एकस्मिन्दिवसे यात्रा प्रवेशोपि यदा भवेत् ॥ कालः
प्रवेशिकस्तत्र विचार्यो न तु यात्रिकः ॥ २११ ॥ प्रवेशानंतरं यात्रा प्रवेशो गमनात्तथा ॥ नव
मेह्नि तिथौ श्विशायेनैव कुर्य्यान्नरः क्वचित् ॥ २१२ ॥ अथ यात्रा विधिः ॥ हुत्वा पावकमभ्य-
र्च्य देवद्विजदिगीश्वरान् ॥ कृतस्वस्त्ययनो विप्रैर्दत्वा दानं नरेश्वरः ॥ २१३ ॥ गम्यदिक्-
पालमिन्द्राद्यं ध्यायन्हृष्टमना व्रजेत् ॥ २१४ ॥ अथ नक्षत्र दोहदम् ॥ कुल्माषांस्तिलसंमि- 
श्रतंडुलान्माषकांस्तथा ॥ गव्यं दधि घृतं दुग्धं मृगमेरास्यशोणितम् ॥ २१५ ॥ पायसंचा-

षमांसंच मृगं शावंच षष्टिकान् ॥ प्रियंगुकम पूपांश्च मसूरान्सत्फलंतथा ॥ २१६ ॥ कू-
र्मंच सारिकां गोधां शल्यं मांसंह विष्यकम् ॥ कृसरान्नं च मुद्गान्नं यवानां पिष्टमेवच २१७ 
मत्स्यान्नं चैव चित्रान्नं दध्योदन मिदंक्रमात् ॥ अश्विभाद्दोहदं प्राश्य गच्छन्विजयते नृपः ॥
२१८ ॥ अथ तिथि दोहदम् ॥ पक्षादितस्तिथौ चार्क पत्रं तंडुल वारिच ॥ घृतंश्चारांह विष्या-
न्नं हेमतोयम पूपकम् ॥ २१९ ॥ बीजपूरं जलंशुद्धं गोमूत्रं चयवान्नकम् ॥ पायसंच गुडंचा-
स्रक् मुद्गान् भुक्त्वा व्रजेन्नरः ॥ २२० ॥ अथ वार दोहदम् ॥ रसालं पायसं चाद्यात्कांजीसु-
यां पयोदधि ॥ पयोश्रितं तिलान्त्वर्ष्याद्दोहदं गमनं क्रमात् ॥ २२१ ॥ अथ दिग्दोहदम् ॥
प्राचीं गच्छेद्धुतं प्राश्य दक्षिणां शांतिलौदनम् ॥ पश्चिमां दोहदं मीन मुदीचीं तु पयस्तथा ॥
२२२ ॥ अथ दोहदे भक्ष्याभक्ष्य विचारः ॥ कथिते दोहदे द्रव्यं भक्ष्याभक्ष्य विचार्य च ॥ भक्ष्य-
मास्वाद्य संयायाद्भक्ष्यमवलोक्य च ॥ २२३ ॥ अथ दोहदालाभे अस्पर्शत्वे च तद्ध्यानम् ॥
 दोहदस्याप्यलाभे तु ध्यात्वा तद्दोहदं व्रजेत् ॥ २२४ ॥ अथ वहन्नाडी पदेन गच्छेदेतस्य प्रसंगा- 
द्दोहदस्वर विचारः ॥ यदुक्तं स्वरतत्त्वज्ञैरहस्यं यामलादिषु ॥ वक्ष्ये तच्चाप युक्तं च संक्षेपात्क्रम-

नादिषु ॥ २२५ ॥ नाडीडावा मृगा चान्द्री पिंगला दक्षिणा रवेः ॥ सुषुम्णा शांभवी मिश्रा सा-
तु योगीन्द्रगोचरा ॥ २२६ ॥ अथ तिथिपरत्वेन स्वरोदयः ॥ शुक्ले प्रतिपदारंभादादौ चन्द्रतिथि-
त्रयम् ॥ ततो दिनत्रयं सूर्य्यो ज्ञेयमेवं पुनः पुनः ॥ २२७ ॥ कृष्णेतु प्रथमं सूर्य्यस्ततश्चन्द्रोऽन्य-
दुक्तवत् ॥ निजनाड्युदयाद्वृत्यः पंच स्वीयस्वरोदयः ॥ २२८ ॥ ततोऽन्यस्य तथा चैवं तिथौ
द्वादश संक्रमात् ॥ २२९ ॥ अथ वारपरत्वेन निजस्वरोदयः ॥ वयः सूर्य्यस्वरा ज्ञेया भानुजीवधरा-
त्मजाः ॥ शनिर्भार्गव चन्द्रज्ञाः प्रोक्ताश्चन्द्रस्वरा इमे ॥ २३० ॥ स्ववारस्वस्वरारंभो नाड्यः पंचो-
दयाद्रवेः ॥ निजस्वरोदितं कार्य्यं स्ववारे स्वस्वरोदये ॥ २३१ ॥ काले सूर्य्यस्वरस्येन्दोः स्वरे चे-
न्दोरवेः स्वरे ॥ उद्वेगश्चाशुभं हानिः स्वस्वकाले स्थितं शुभम् ॥ २३२ ॥ अथ प्रातः स्वस्वरपूर्व-
मुत्थानम् ॥ प्रातर्नित्यं समुत्तिष्ठेत्स्ववारस्य स्वरे सदा हि ॥ अयने दक्षिणोऽस्य स्वरोऽन्यो वोत्तरे-
रवेः ॥ २३३ ॥ निजस्वरो यदा कार्ये न चेत्तं प्रोक्तवत्तदा ॥ प्राणायामादियत्नेन वाहयेत्तं स्वसु-
धीः ॥ २३४ ॥ अथ चन्द्रस्वरकृत्यम् ॥ प्रवेशोद्वाहयात्रा श्चवस्त्रालंकारधारणम् ॥ संधिः शुभा-
नि कार्य्याणि कार्य्याणीन्दुस्वरोदये ॥ २३५ ॥ पौष्टिकं शांतिकं प्रीतिमैश्वर्यं च रसायनम् ॥

सु.ग. योगाभ्यासादिकं कर्म सिध्येत्सर्वं विधोःस्वरे ॥ २३६ ॥ भ्रांतः शोकविषार्त्तश्च मूर्च्छितोज्व-
२४२ रितोपिवा ॥ सज्जनस्य प्रबोधे च चन्द्रनाडीं प्रवाहयेत् ॥ २३७ ॥ अथ सूर्य्य स्वर कृत्यम् ॥ ।८४
कुर्यात्सूर्य्यस्वरे युद्धं व्यवहारं च भोजनम् ॥ मैथुनं विग्रहं द्यूतं स्नानं भंगं भयं तथा ॥ २३८ ॥
विद्विषां मारणं स्तंभं मोहनोच्चाटनं वशम् ॥ सूर्य्यनाड्यामियात्सिद्धिमत्युग्रं कर्म चाखिल-
म् ॥ २३९ ॥ मन्दाग्नि भोजनादूर्ध्वं वश्यार्थे योषितामपि ॥ सूर्य्यनाड्यां नरः स्वप्यात्स्वपत्ने
नापि सर्वदा ॥ २४० ॥ आलिंगने प्रसंगे यो वश्यार्थं शयने स्त्रियाः ॥ चन्द्रस्वरं स्व सूर्य्येण स-
कामस्तु पिवन् भवेत् ॥ २४१ ॥ अथ वहन्नाडी स्वर कृत्यम् ॥ पूर्णानाडी स्थिते पूर्णं का-
र्य्यं सिध्यति पृच्छके ॥ शून्य नाडी स्थिते शून्यं संक्रमेपि न सिध्यति ॥ २४२ ॥ अग्रं दत्त्वा व्रजे-
द्दीमान्पूर्णा नाड्याः पदत्रयम् ॥ प्रवेश समये नाड्या यात्राद्यं सर्व सिद्धिदम् ॥ २४३ ॥ क्रूर-
युद्धे स्वरश्चान्द्रः समासन्ने रवेः शुभः ॥ पापे चन्द्रस्वरे जेता स्थायी सूर्य्यस्वरे जयी ॥ २४४ ॥
।८० रिक्तमंगं रिपुः कृत्वा वहन्नाड्यां स्थितो जयेत् ॥ शून्य भागे स्थितः शत्रुर्हन्यते नात्र संशयः ॥ २४५
२४५ ॥ अथ पंच घट्यात्मके स्वरे तत्त्वोदये ॥ तत्त्वानि पंच भूराप स्तेजो वायुर्नभः क्रमात् ॥ स्वै-

सु॰ग॰ कस्यघटीभोगोपंचघट्यात्मकेस्वरे॥ २४६॥ अथतत्त्वानांविचारः॥ भुवोमध्यजलस्या-
१४६ धः सर्वदोर्ध्वंचतेजसः॥ वायोस्तिर्यक्प्रवाहःस्यात्संक्रमेनभसोर्द्वयोः॥ २४७॥ अथस्वर-
तत्त्वानांफलम्॥ विजयस्तैजसेतत्त्वेसिद्धिराप्येरसोभवेत्॥ भूतत्त्वसक्षतंयुद्धेवायौभंगो-
यखेमृतिः॥ २४८॥ अथयात्रासमयेगमनविधिः॥ स्वस्यदेहस्यवामेवाग्रेगुरोर्वासुखव्ययो-
वितः॥ हविष्यंप्राश्यभूपालोब्राह्मणोनुमोदितः॥ २४९॥ श्रावयन्मंगलान्येवसंया-
याद्विजयीप्रभुः॥ गम्यदिक्सम्मुखंदत्त्वावहन्नाडीपदंपुरः॥ २५०॥ द्वात्रिंशच्चपदान्यस्मा-
न्निर्गत्यवसुधापतिः॥ दैवज्ञद्विजवर्य्येभ्यःसहेमतिलपात्रकम्॥ २५१॥ घृतंपात्रञ्च
सद्द्रव्यंदत्त्वारोहेच्चवाहनम्॥ केचित्तुदक्षिणंपादमग्रेदत्त्वाव्रजेदिति॥ २५२॥ प्रोक्तंतत्तु
स्वकालोक्तस्वरश्चेन्नभवेत्तदा॥ अथप्रतिदिशयानेवाहनानि॥ प्राच्यांगजंरथंयाम्यां
प्रतीच्यांतुरगोत्तमम्॥ उदीच्यांशिबिकांभूयःसमारुह्यव्रजन्जयेत्॥ २५३॥ अथदिग्यु-
क्तवाहनाभावेध्यानम्॥ दिग्युक्तवाहनाभावेध्यात्वातद्वाहनंव्रजेत्॥ २५४॥ अथस्वगम- १४६
नविलम्बेप्रतिनिषिद्धत्वेनप्रस्थानम्॥ विलम्बःस्वगमेराज्ञःकार्य्याद्यैर्यदिचेत्स्वयम्॥ २

छत्रचामरशस्त्रादिगम्यायांप्रतिप्रेषयेत् ॥ २५५ ॥ चालयेयुश्चविप्राद्या उपवीतमथायु-
धम् ॥ क्षौद्रंधात्रीफलंचापि प्रस्थाने चात्मनः प्रियम् ॥ २५६ ॥ अथ प्रस्थितस्य वसतिप्रदे-
शाः ॥ गर्गोगेहांतरंगेहाद्भृगुः सीमांतरं जगुः ॥ प्रस्थानंतु भरद्वाजो वाणविक्षेपणावधि ॥
२५७ ॥ गुराद्वहिर्वशिष्ठोन्ये धनुषांशतपंचकम् ॥ केचिच्छतद्वयं चैके धनुर्दशमितं जगुः ॥
२५८ ॥ एतदुक्तमिते देशे गम्याशासि सुखोन्नृपः ॥ संप्रस्थितस्तदायात्रा सुमुहूर्तफलप्रदा
॥ २५९ ॥ अथ कृतप्रस्थानस्यापि ततोगमः ॥ कृतप्रस्थानकोवापि स्वयं संप्रस्थितोपिवा
ततोपि गमने चिन्त्यं सच्चन्द्रशकुनादिकम् ॥ २६० ॥ अथ प्रस्थितस्य गमनविधिः ॥ प्रथमे-
ह्नि नृपः क्रोशं द्वितीयेह नियोजनम् ॥ क्रोशयद्वं तृतीयेऽह्नि यथेच्छंतु ततः परम् ॥ २६१ ॥ अथ
प्रस्थाने प्रस्थितस्य कार्य्यवशाद्विलम्बे दिननिर्णयः ॥ प्रस्थाने भूपतिस्तिष्ठेन्नैकत्र दशरात्र-
कम् ॥ सप्तरात्रंतु सीमांतः पंचाहं ब्राह्मतोजनः ॥ २६२ ॥ अथ दिक्परत्वेन प्रस्थानम् ॥ स-
प्ताहान्येव पूर्वस्यां प्रस्थानं पंच दक्षिणे ॥ पश्चिमे त्रीणि शस्तानि सौम्यायांतु दिनद्वयम्
॥ २६३ ॥ स्वयं पंच दिनेतिष्ठेद्दिनं भार्यादशावरम् ॥ त्रिमंत्री वाहनं सप्त स्वर्णं मासं द्विरायु

क्षम् ॥ २६४ ॥ अथ प्रस्थानोक्त दिनाधिक्ये पुनर्यात्रा ॥ राज्ञश्चातिक्रमश्चेत्स्यात्प्रस्थानस्य दि-
नावधेः ॥ सन्मुहूर्त्ते पुनर्यात्रां कुर्य्यान्नेहस्ततोपिवा ॥ २६५ ॥ अथ यात्रायाः पूर्वत्याज्यानि ॥
यात्रादिनात् पूर्वतः सप्त रात्रौ स्त्रीसेवनं त्यजेत् ॥ प्रासक्तश्चेन्नृपश्चैकरात्रंतु सर्वथैवहि ॥ २६६ ॥
जह्याद्दुग्धं त्रिरात्रात्तु क्षौरं च पंचवासरात् ॥ तैलं विरेकं वमनं क्षौद्रं तद्वासरे त्यजेत् ॥ २६७ ॥ को-
पंच सुरतं तैलं पक्वमांसं गुडं मयः ॥ सेवित्वा नृपतिर्गच्छेल्लभते विविधापदः ॥ २६८ ॥ अव-
मान्य स्त्रियं विप्रान् विरुध्य स्वजनैः सह ॥ ऋतुमत्यां च भार्यायां गच्छन्मृत्युमवाप्नुयात् ॥
२६९ ॥ ऋतुस्नानोत्तरं नार्या यात्रा त्वावश्यकी यदि ॥ कृतभोगो नरो यायाद्दानं शांतिं विधा-
यच ॥ २७० ॥ अथ यात्रायां शुभशकुनाः ॥ दधिदूर्वाक्षता रौप्यं पूर्णकुंभोथ सर्षपाः ॥ दीपो
गोरोचनादर्शौ प्रज्वलन्हव्यवाहनम् ॥ २७१ ॥ वेदघोषः शुभा वाचो जयमंगलसंयुताः ॥ शंख-
दुन्दुभिवीणादि मृदुमर्द्दलनिःस्वनाः ॥ २७२ ॥ सिद्धमन्नं च ताम्बूलं मीनो दुग्धं घृतं मधु ॥ म-
दिरा रुधिरं मांसं सस्यं नानाविधं फलम् ॥ २७३ ॥ इक्षवः सितपुष्पाणि पद्म मुक्त गोमयम् ॥

ध्वजः सिंहासनं छत्रं नृपाणां कुसुमायुधम् ॥ २७४ ॥ दोला वितान सद्वस्त्रं रत्नालंकार दी-

मु.ग. पिका ॥ विप्रो भूपो गुरुर्वृद्धः पुत्रपौत्रादिभिर्वृतः ॥ २७५ ॥ दैवज्ञः कन्यका योषा शुभगा पु-
२४९ त्रसंयुता ॥ वरांगना तपस्वी च वदान्योथ नरः शुचिः ॥ २७६ ॥ रजको धौतवस्त्रं च शवं रोदनव-
र्जितम् ॥ तोयार्थी पूर्णकुंभश्चाऽनुगः पृष्ठे मृदोऽजनम् ॥ २७७ ॥ गजो वाजि रथो धेनुः सवत्सा तु
विशेषतः ॥ श्वेतो वृषोऽन्यवर्णोपि वद्धो कैश्चित्तदा शुभः ॥ २७८ ॥ वर्णी स्वमित्र मुख्याणिवंद-
भौं हंसो मयूरकः ॥ नकुलश्च भरद्वाजश्चाषः छागस्तथैव च ॥ २७९ ॥ चित्तोत्साहकरं वस्तु शु-
भान्येतानि दर्शनात् ॥ २८० ॥ अथ शुभ वस्तुनि विशेषः ॥ कीर्तनाच्छ्रवणांश्रेष्ठं श्रवणात्तु-
विलोकनम् ॥ दर्शनात्स्पर्शनं चैषां दध्यादीनां गमादिषु ॥ २८१ ॥ शुभदं दर्शनं येषामभिवा-
द्येवतान्नृपः ॥ कृत्वा दक्षिणतः सर्वान् गच्छन्सिद्धिमवाप्नुयात् ॥ २८२ ॥ अथ दुःशकुनाः ॥
कार्पासं क्रया धान्यं च लोहकारश्चरोदनम् ॥ लोहं च रक्तपुष्पं च गुडस्तैलं क्षुतं तथा २८३ पिण्याक-
कत्वणं तक्राणि भस्मास्थि लवणं तुषः ॥ पाषाणो धनचर्मादि सधूमो वह्निरौषधम् ॥ २८४ ॥
मत्तो वांतः खलो हिंस्रो मुण्डितश्च बुभुक्षितः ॥ जटिलश्च तथा रोगी संन्यासी मलिनो रिपुः ॥ - २४९
२८५ ॥ खंजो नग्नोंगहीनश्च तैलाभ्यक्तोथ गर्भिणी ॥ काषायवस्त्रधारी च मुक्तकेशोथ पा-

ग्रावान् ॥ २८६ ॥ वंध्याच शृंखली चौरः षंढोयान पलायनम् ॥ खरोष्ट्रमहिषारूढाः कुवा-
क्यश्रवणं तथा ॥ २८७ ॥ कृष्णा सर्पोथ मंडूकः सरटो ग्रामशूकरः ॥ क्षपणाः पतितो व्यंगः
कुब्जोंऽधोवधिरोजडः ॥ २८८ ॥ आर्द्रवासोथ विधवा स्वर्णकारो रजस्वला ॥ उपानत्कर्दमं-
गोच पुरीषंच वसात्तृणम् ॥ २८९ ॥ तथा रजस्वला पुष्पं कृष्णगोक्षा महिषो वृषः ॥ स्वगेहदह-
नं युद्धं मार्जारं स्वकुलेकलिः ॥ २९० ॥ गोस्तुतं प्राणिनामंग शिरः श्रोत्रप्रकंपनम् ॥ मार्जा-
रो मार्गरोधश्च स्खलनं रिक्तकुम्भकः ॥ २९१ ॥ एते दुःशकुना याने सर्वकार्य्यनिषेधकाः ॥
२९२ ॥ अथ महांप शकुनाः ॥ छिक्का विडाल सर्पाभ्यां मार्गरोधो मृतेर्वचः ॥ मार्जारंमा-
हिषं युद्धं शुनः कर्णप्रकंपनम् ॥ २९३ ॥ अतिधूमान्वितो वह्निः षडेते मरणप्रदाः २९४
अथ दुःशकुना वामतस्त्याज्याः ॥ एते दुःशकुना वामे कृता श्चेच्छकुनोत्तरम् ॥ अदुष्टा-
स्वते ज्ञेयाः शकुना दक्षिणे शुभाः ॥ २९५ ॥ अथ केषांचित्कीर्तनं केषांचिद्दर्शनं शुभम शु-
भंच ॥ शशजाहक गोधानां सर्पशूकरयोरपि ॥ कीर्तनं शुभदं नाम्नानोरुतं नच दर्शनम् ॥
२९६ ॥ ऋक्षवानरयोर्याने दर्शनं च रुतं शुभम् ॥ नाम संकीर्तनं नेष्टं दक्षिणे च खरस्वनः

॥ २९७ ॥ अथ वामभागे शुभाः ॥ शूकरी कोकिला पल्ली छुच्छुका पिंगलारला ॥ पोत-
कीच शिवा सर्वे सुमाख्या वामगाः शुभाः ॥ २९८ ॥ मध्याह्नोत्तरतः श्रेष्ठौ चाषबभ्रूच वाम । ।०।
गौ ॥ २९९ ॥ अथ वाम भागेत्व शुभस्वनः ॥ खरोलूक शृगालानां वामे पृष्ठे शुभस्वनः ॥
३०० ॥ अथ दक्षिण भागे शुभः ॥ श्रीकंठो वानरो भास श्छिक्करः पिक कोरुतः ॥ श्वाक्ष्व
क्षो वायसः श्रेष्ठाः स्त्री संज्ञा श्चापि दक्षिणे ॥ ३०१ ॥ वनश्वा मृगवच्छस्तः संध्यायां दक्षि-
णः शिखी ॥ ३०२ ॥ अथ प्रदक्षिणा गताः शुभाः ॥ प्रदक्षिणा गताः शस्ता याने तु मृगप-
क्षिणः ॥ विषमा श्चेद ति श्रेष्ठा व्रजन्तो भूपतेर्मृगाः ॥ वामाद्दक्षिणगाः श्रेष्ठा मरावभ्रुपत
त्रिणः ॥ ३०३ ॥ अथ वामगाः शुभाः ॥ शृगालः सारमेयश्च दक्षिणाद्वामगः शुभः ३०४
अथात्र विशेषः ॥ पूर्व दिग्गमने पूर्णा वदतः सरटः पिकः ॥ वामगो दक्षिणो काकः शुभो ऽ-
ऽन्यत्रागमे ऽन्यथा ॥ ३०५ ॥ चाष पूर्णानननो व्योम्नि विधत्ते यदितोरणम् ॥ अन्योवा वि-
।०। जयस्तत्र काकश्चेन्मरणं ध्रुवम् ॥ ३०६ ॥ अथ शुनश्चेष्टा विशेषः ॥ शीर्षोदर हनुघ्राणा हृत्कंठ १५१
स्कन्ध पृष्ठकम् ॥ श्वा दक्षिणेन पादेन कंडूयन् गमनादिषु ॥ ३०७ ॥ लाभं क्षेमं जयं धत्ते ऽ-

दक्षिणांगे विशेषतः ॥ वामपादेन सर्वस्वनाशं प्रोक्तं फलस्य च ॥ ३०८ ॥ विष्टायंकादिलिप्तांगः
श्रवणास्फालनं श्रुतम् ॥ दन्तप्रकाशनं निद्रालस्यं कुर्वन्मृतिप्रदः ॥ ३०९ ॥ अथ यात्रोक्तशा-
कुनानां वामदक्षिण भागयोः प्रवेशादौ व्यत्ययः ॥ प्रवेशे निम्नगोत्तारे नष्टसंवीक्षणे भये
इडानाड्या प्रवाहे च द्यूते भैषज्यकर्मणि ॥ ३१० ॥ युद्धे तेव्यत्यया ज्ञेयाः प्रागुक्ताः शकुना
श्रये ॥ वामे वा दक्षिणे ये च संप्रोक्ताः शकुनाश्च ते ॥ ३११ ॥ वैपरीत्येन विज्ञेयाः प्रवेशोन्नय।
नैर्बुधैः ॥ यात्रोक्ताः शकुना ये च त एवन्नृपदर्शने ॥ ३१२ ॥ अथ वायोः शुभाशुभस्त्वच क-
त्वम् ॥ शुभदो दक्षिणे पृष्ठे मन्दशीतोष्णमारुतः ॥ ३१३ ॥ प्रचंडः सन्मुखे वामे भंगदः सम-
रादिषु ॥ ३१४ ॥ अथ शकुनादौ शुभाशुभदिग्विचारः ॥ अर्धयामावशेषायां रात्रेर्यामिश्च
मारातः ॥ अष्टास्वपि क्रमाद्दिक्षु भ्रमणं भास्वतः स्मृतम् ॥ ३१५ ॥ ज्वलंती भानुनायुक्ता प्रो-
ज्झिता दग्धसंज्ञिता ॥ गम्या धूमवती चैता दीप्तास्तिस्रो शुभा दिशः ॥ ३१६ ॥ अन्याः शां-
ताभिधास्तिस्रः पंचम्यः शुभदा दिशः ॥ मध्यगं दिग्द्वयं मिश्रं विज्ञेयं शकुनादिषु ॥ ३१७ ॥ 
अथ दुःशकुने जाते कर्तव्यमाह ॥ यानेदुःशकुने साज्यं स्वर्णं दत्वा व्रजेत्सुखम् ॥ आद्यदुःश-

मु॰ग॰ कुने प्राणानेकादश मितान्व्रजेत् ॥ ३१८ ॥ स्थित्वा सुशकुनं भूयो दृष्ट्वा हृष्टो व्रजेत्पुनः ॥ द्विती-
१५३ ये शकुने भूयो दुष्टेपि शकुने व्रजेत् ॥ ३१९ ॥ प्रतीक्ष्य षोडश प्राणान् गच्छेन्नैव तृतीयके ॥
विरुद्धे शकुने पादौ प्रक्षाल्याचम्य भूपतिः ॥ ३२० ॥ स्थित्वा तु क्षीरिवृक्षाधो भूयः सुशकुने-
र्व्रजेत् ॥ ३२१ ॥ अथ यात्रायां त्याज्यदोषाणां संग्रहः ॥ तिथ्यर्क्षायनमासाहर्भवाः शूलादय-
श्चये ॥ मन्मुखस्थो भृगुः सौम्यो भृगोर्वक्रादिकं तथा ॥ ३२२ ॥ ललाटी परिघो दंडो रजः
सूतकमुत्सवः ॥ मृतपक्षोऽर्कषड्रिक्तातिथयः १२।६।४।९।१४ पापवासराः ॥ ३२३ ॥
पृष्ठवामगतश्चन्द्रोऽभिजिद्याम्यांभपञ्चकम् ॥ जन्मराशिभतो रन्ध्रं लग्ने शत्रुभतोरिभम
॥ ३२४ ॥ रिपुराशिभयोर्लग्ने लग्नांशौ कुम्भमीनगौ ॥ लग्नं पृष्ठोदयं पृष्ठादिकस्थमृक्षंश-
निस्तुखे ॥ ३२५ ॥ द्यूने शुक्रस्तथा केन्द्रे वक्री वक्रगवासरः ॥ एतेऽन्येपि विवाहोक्ता दोषाः
नेष्टाः प्रयाणके ॥ ३२६ ॥ अथात्र युद्धयात्रावद्भूतमिति प्रसंगादुक्तम् ॥ अथो वक्रे च नक्ष-
त्रैवारे चोपचयावहे ॥ चन्द्रताराबलोपेते कुमारे शुभवासरे ॥ ३२७ ॥ कालजे दिग्भवं वापि । १५३
स्वस्य घ्नती बलेश्वरे ॥ योगिनीकालदिक्शूलचन्द्रतारानुकूल्यके ॥ ३२८ ॥ दशायामष्टवर्गे

वागोचरेल्लाभगोखगे॥ सुहृदोक्तमयदेयोगेशोभनेदेहजेस्वरे॥ ३२९॥ द्यूतंकार्य्यं विनोदाय
धनलाभाय भूमिपैः॥ पूर्वादित श्चतुर्दिक्षु नंदाद्यास्तिथयः क्रमात्॥ ३३०॥ मध्येपूर्णाद्गमे
पंचह्य कारादाः स्वरास्तथा॥ तिथिदिक् चरत श्चैवं घटीषट्क प्रमाणतः॥ ३३१॥ तात्कालिकः
क्रमाज्ज्ञेयोदिक् स्वरस्तत्त्ववेदिभिः॥ बाल प्रभृतयोऽवस्था स्तेषांज्ञेयाः क्रमाद्बुधैः॥ ३३२॥
पूर्णाजयः स्वरेद्यूने बाल घाताज्जयो भवेत्॥ ईषद्धातात्कुमारे चवृद्धे भंगोमृतोमृतिः ३३३
स्वयंस्वर बलोपेते दिशिस्थित्वाथ शात्रवम्॥ हत्वान्यत्र दिशिद्यूतं युद्धं कुर्वञ्जयेन्नृपः ३३४
अथ यात्रा निवृत्तौ गृह प्रवेशः॥ प्रवेशो भूपतेर्यात्रा निवृत्तौ निज मन्दिरे॥ श्रेष्ठोवारे गुरौ शुक्रे
बुधे चन्द्रेशनैश्चरे॥ ३३५॥ चित्रोत्तरानुराधाख्य रोहिणी रेवती मृगे॥ त्यत्कारिक्तां मघां स्व-
र्यं भौसंलग्नं चरंबलम्॥ ३३६॥ पुष्ये हस्ते धनिष्ठायां शतेयुक्तः शुभः परैः॥ ३३७॥ अथ
गृह प्रवेशेऽन्य नक्षत्राणां फलम्॥ श्रवत्रये पुनर्वस्वोः स्वातिः पुष्याश्विभेषुच॥ प्रवेशेचपुन-
र्यात्रा शीघ्रं भवति भूपतेः॥ ३३८॥ स्वस्यनाशः प्रवेशेस्यात्पूर्वासु भरणी मघे॥ आर्द्रा श्लेषाभि- 
धे मूले ज्येष्ठायां पुत्र नाशनम्॥ कृत्तिकायां गृहे दाहो विशाखायां मृतिः स्त्रियाः॥ ३३९॥ अथ

मु.ग. लग्नबलम् ॥ स्थिरेंगेशेशुभैरर्थे केन्द्रकोणत्रिलाभगैः २।४।७।१०।५।९।३।११ पापैर्लाभ-
१५५ त्रिषट् ११।३।६ ॥ संस्थैः शुद्धे तुर्ये ४ तथाष्टमे ८ ॥ ३४० ॥ प्रवेशोभूभुजा मिष्टो विजन्मर्भाष्टमे १००
स्मृतः ॥ ३४१ ॥ इति श्री मद्देवज्ञ रावलहरिशंकर सूरिसूनु गणपति कृते मुहूर्त्त गणपतौ प्रवे-
शांतं प्रकरणं समाप्तम् ॥ १७ ॥ ॥ अथ वास्तु प्रकरणम् ॥ तत्रादौ वासार्थ शुभाशुभो ग्रामः
स्व नाम राशितो ग्रामराशिद्व्यंकेषु दिक् शिवैः २।९।५।१०।११ ॥ संमितश्चेत्तदास्वस्य तद्ग्रा-
मेवास उत्तमः ॥ १ ॥ रोगोष्टद्वादशो तुर्य्ये ८।१२।४ वैरमाद्ये च सप्तमे १।७ ॥ हानिः षष्ठे तृ-
तीये च। ६।३। ग्राम राशौ स्वनाम भात् ॥ २ ॥ अथ काकिणी विचारः ॥ स्ववर्गं द्विगुणं कृ-
त्वा परवर्गान्वितं गजैः ८ ॥ भजेच्छेषास्तु काकिण्यः कार्याश्चैवं परस्परम् ॥ ३ ॥ अधिका
यस्य काकिण्यो भवेदन्यस्य सोऽर्थदः ॥ इत्थं काकिणिकाधिक्ये निवसेन्नगरे नरः ॥ ४ ॥
अथ ग्रामे निवास दिग्विचारः ॥ मध्ये ग्रामस्य गोद्वन्द्वनक्र सिंहाख्य राशयः ॥ मीनालिक-
१०० न्यकाः १२।८।६ पूर्वे दक्षिणे कर्कराशिकः ॥ ५ ॥ धन्विनः पश्चिमे मेषतुलाकुंभ १।७।११ १५५
स्तयोत्तरे ॥ नोवसेयुर्नराः सौख्यधनलाभात्मजार्थिनः ॥ ६ ॥ वैनतेय मुखा वर्गा बलिष्ठाः

पूर्वतः क्रमात् ॥ स्वदिशास्य गृहं श्रेष्ठं पञ्चम्यां दिशि मृत्युदम् ॥ ७ ॥ ग्रामे चतुर्थकोणेषु व-
सेयुर्हीनजातयः ॥ विप्राद्यास्तु दिशास्वेव मध्येवापि सुखेप्सवः ॥ ८ ॥ अथ भूमि विचारः
श्वेता भूमिस्तु विप्राणां रक्ता शस्ता धनुर्भृताम् ॥ विशां पीताथ शूद्राणां श्यामा मिश्रेतरस्य च
॥ ९ ॥ मधुरः कटुकस्तिक्तः कषाय स्वरसाः क्रमात् ॥ आज्यासृग्धान्यमद्यानां गंधा वर्णा भ-
वान्त्वमे ॥ १० ॥ प्रागादि प्रवणा भूमिः क्षत्रादीनां शुभा क्रमात् ॥ सर्वदिक्प्रवणा भूमिर्विप्रा-
णां तु गृहादिषु ॥ ११ ॥ अथ भूमौ शल्य ज्ञानम् ॥ गृह प्रश्नाक्षरं पूर्वं यदि वर्गादि मंतदा ॥
शल्यं तद्दिशि जानीयात् ह्ययैर्भमध्यमं वदेत् ॥ १२ ॥ अथ गेह भुवः शुभाशुभ परीक्षा ॥ गेह-
भूमौ खनेद्गर्तं हस्त मात्रं निशामुखे ॥ जल पूर्णां यदि प्रातः सजलं चेच्छुभं तदा ॥ १३ ॥ अथ
गेहार्थे भुवः शोधन प्रकरणम् ॥ ज्ञात्वा गेहोचितां भूमिमाजलं निखनेत्त्वधः ॥ आजङ्घेदंन्त-
मात्रं वा पूरयेच्चोत्तमाश्मभिः ॥ १४ ॥ अथ भूमि प्रथम खनने शुभाशुभ फलम् ॥ क्षेत्रेतु खन्य-
105 मानेप्राक् दृश्यंते ऽश्मान इष्टिकाः ॥ तदारोग्य धनाप्तिः स्यात्कर्तुः सद्भवनादिषु ॥ १५ ॥ क- १५६
पालांगारकेशास्थि दर्शने निधनं भयम् ॥ १६ ॥ अथ सम भूमौ दिक्साधनम् ॥ साधिन्या वा-

 जलेनापि कृत्वा भूमिं समां ततः ॥ तत्र दिक्साधनं कृत्वा गेहारंभं समाचरेत् ॥ २७ ॥ दिक्-
शुद्धिरहितं गेहं प्रासादो वा जलाशयः ॥ कुर्याद्धानिं भवति तस्मादादौ दिक्साधनं चरेत् ॥ २८ ॥ 
द्वि २ घ्नायामसमितं सूत्रं द्विपाशं प्रांत्ययोर्दृढम् ॥ कृत्वायामतृतीयेंऽशे चिह्नं तत्कर्षणाय च
॥ २९ ॥ विस्तारार्द्धे तु कोणार्थं क्षेत्रमध्यगसूत्रतः ॥ प्रांत्येशंकुद्वये पाशौ कृत्वाथो कर्षणा-
द्विधम् ॥ ३० ॥ चिह्नमाकृष्य कोणार्थे चिह्ने शंकुं निधापयेत् ॥ एवं कृते चतुष्कोणास्त्वेष्टक्षे-
त्रे भवंति च ॥ ३१ ॥ अथ गेहस्यायाः ॥ आयाः क्रमाद्ध्वजो धूम्रः सिंहः श्वा वृषभः खरः ॥
गजो ध्वांक्ष इमे ज्ञेयाः प्राज्ञैर्गेहादिकर्मसु ॥ ३२ ॥ विस्तारगुणिते क्षेत्रे व्यायामेऽथाष्टभि ८-
र्हृते ॥ शेषे ध्वजादिकश्चायः प्रशस्तो विषमोऽखिलः ॥ ३३ ॥ प्राचीतो वलिनश्चाया ध्वजाद्याः
क्रमतस्त्विमे ॥ सर्वदिक्षु ध्वजे वक्त्रं सिंहे प्राग्दक्षिणोत्तरम् ॥ ३४ ॥ प्राच्यां वृषे गजे याम्य पूर्वयोः
शुभमालयम् ॥ ध्वजे प्रत्यङ्मुखो वापि सिंहे कुर्यादुदङ्मुखम् ॥ ३५ ॥ दक्षिणाभिमुखं नागे
 कुर्यात्प्राचीमुखं वृषे ॥ द्वात्रिंशद्धस्तकं यावदेकादशाय वात्परम् ॥ ३६ ॥ चिन्त्यमायादिकं ता- 
वन्नो चिन्त्यमधिके ततः ॥ आलिंदादिषु तार्णो वा मन्दिरे वा चतुर्मुखम् ॥ ३७ ॥ आयादिकं।

तुनोचिन्त्यंताराॅंमासाद्योपिन ॥ २८ ॥ अथक्षेत्रफलादायाद्यानयनम् ॥ क्रमाद्वेदांक
वसुमगात्रिनगाष्टाब्धिवारयौः ९।९।६।८।३।७।८।४।८ ॥ हतेक्षेत्रफलेष्टांगनन्दाष्टा-
र्कभ ८।६।९।८।१२।२७ संख्यकैः ॥ २९ ॥ तिथ्यक्षैः खाश्विभूमि २५।५।१२० श्चतष्टेशेष
मितेतथा ॥ क्रमादायोथवारोंशोडुविशांव्ययधिष्ण्यके ॥ ३० ॥ तिथिर्योगा ८ स्ततयायुष्य-
मेतेज्ञेया गृहादिषु ॥ ३१ ॥ अथ नक्षत्राद्राशि ज्ञानं ॥ अश्विन्यादित्रयंमेषे १ मघा तस्त्रितयं
५ हरौ ॥ मूलात्त्रयं धनुष्येवं ९ द्वेद्वे भेशेषराशिषु ॥ ३२ ॥ अथ घटितम् ॥ देशे ग्रामे पुरे गेहे प्र-
भौ मित्रेन्ययोषिति ॥ एक नाडी प्रशस्तास्याद्दिहृद्याभिन्न नाडिका ॥ ३३ ॥ गेह गेहे शयो-
र्मैत्र्योवर्णाद्यास्तु विवाहवत् ॥ गेहे शालयभैक्येतु मृत्युदंतद्गृहं स्मृतम् ॥ ३४ ॥ अथव्यया-
नयनम् ॥ गेहनक्षत्र संख्याके नाग ८ तष्टेव्ययो भवेत् ॥ वह्वायं शुभदं चाल्पव्ययंवेश्मनचा-
न्यया ॥ ३५ ॥ अथेन्द्रराजयमांशानयनम् ॥ ध्रुवादिनाम वर्णौघ्नयुक्तंक्षेत्रफलेतथा ॥ त्रि-
भि ३ स्तष्टेंऽशकाः शेषे शक्रांतकन्पाः क्रमात् ॥ ३६ ॥ इन्द्र भूपौ शुभावंशौयमोनेष्टोगृ- १५८
हादिषु ॥ ३७ ॥ अथस्वेष्टायनक्षत्राभ्यांपिंडानयनम् ॥ एको मितेष्टक्षितोयन निघ्नानेत्र

शरेन्दवः १५२ रूपोनेष्टाय निघ्नेन्दुनागै ८१ र्युक्तास्तथा पुनः ॥ ३८ ॥ नगचन्द्र १७ मिते।
र्युक्ता विभक्तास्तेन्त्यया खिवभिः २१६ ॥ शेषं क्षेत्रफलं खेटनक्षत्राय समुद्भवम् ॥ ३९ ॥ अथ १०१
क्षेत्रफलाद्दैर्घ्यविस्तारज्ञानम् ॥ भक्ते क्षेत्रफले स्वेष्टविस्तारेण च दीर्घता ॥ स्वेष्टदीर्घ तथा
भक्ते विस्तारो वेश्मनः स्फुटः ॥ ४० ॥ अथ गृहारम्भसमयः ॥ चैत्रे शुक्लादिके शोको वैशाखे
धान्यवर्धनम् ॥ ज्येष्ठे कर्तुर्भवेन्मृत्युराषाढे पशुपीडनम् ॥ ४१ ॥ श्रावणे धनवृद्धिः स्या-
न्नाशो भाद्रपदे भवेत् ॥ आश्विने तु भवेद्युद्धं कार्तिके भृत्यनाशनम् ॥ ४२ ॥ लक्ष्मीलाभो
भवेन्नृणां मार्गे पौषे थ फाल्गुने ॥ माघे त्वग्निभयं विद्याद्गृहारंभे न संशयः ॥ ४३ ॥ त्यक्त्वा
चतुर्दशीं षष्ठीं चतुर्थीमष्टमीममाम् ॥ नवमीं च रविं भौमं गृहारंभो विधीयते ॥ ४४ ॥ पुष्ये
मृगेनुराधायां धनिष्ठायुगलोत्तरे ॥ हस्तत्रये च रोहिण्यां रेवत्यां गृहमारभेत् ॥ ४५ ॥ स्वाति-
का मन्दिरं कुर्यात्पुनर्भेभिजिति श्रुतौ ॥ गृहारंभेर्कभाद्भैः ३ शीर्षस्थैर्दाह ईरितः ॥ अग्रपा-
 द्स्थितैर्वेदैः ७ शून्यं स्याद्वृषचक्रके ॥ ४६ ॥ स्थिरता पृष्ठपादस्थैर्वेदैः ११ पृष्ठे श्रिया त्रिभिः १४ 
लाभो वेदैः १८ र्वक्षकुक्षौ रामैः २१ पुच्छपतिक्षतिः ॥ ४७ ॥ कुक्षौ वामे ऽब्धिभैः २५ स्स्वत्वं सुखं

पीडात्रिभि २८ स्वभैः ॥ ४८ ॥ अथैतदेव पुनः स्पष्टम् ॥ अर्कभात्सप्तभे ७ रुद्रे १८ र्दिग्भिः २८
स्याद् सदिस्वदम् ॥ ४९ ॥ अथ सौरमासाद्गेहादौ वास्तोर्मुखं पुच्छं कटिश्च ॥ देवालये त्रये
मीना १२ द्गेहे सिंहा ५ द्द्वयोस्थिते ॥ जलाशये मृगाद्वास्तोर्मुखमीशाद्विलोमतः ॥ ५० ॥ वि
लोम भ्रमरागात्पृष्ठ गतायांच दिशि स्मृतम् ॥ सूर्य्यस्य मुखतः पुच्छं संमुखायां दिशि स्मृतम्
इत्युक्ते पृष्ठ दिग्भागो वास्तोः खात गृहादिषु ॥ ५१ ॥ अथ गृहे खातादिक स्पष्टीकरणं ॥ आ
ग्नेय्यां खननं कुर्यात्सिंहाद्राशि त्रये रवौ ॥ ईशान्यां च तथा चोक्तं वृश्चिकादि त्रये रवौ ॥ ५२ ॥
कुम्भादि त्रितये वायौ नैर्ऋत्यां वृषभत्रये ॥ ५३ ॥ अथ चान्द्रमासाद्द्वारनिश्चयार्थं खातार्थं
च वास्तु शिरः ॥ सिते भाद्रपदाद्वास्तु क्रमान्मास त्रिषु त्रिषु ॥ प्रागाशादि शिरो गेहे द्वारं
शीर्षदिशि स्मृतम् ॥ ५४ ॥ वास्तोः शीर्षं दिशि ज्ञेयं पुच्छं सन्मुख दिग्गतम् ॥ ५५ ॥ अथ
वास्तोर्वाम कुक्षौ खाते शंकुरोपणम् ॥ वसुलोचन भागेषु हित्वा शान् दश सप्त च ॥ पुच्छे
त्वेकादशे खातं वाम भागे च मध्यतः ॥ गेहारंभे मुहूर्ते च शंकुं दत्वाऽश्म पूरणम् ॥ ५६ ॥ अ
थ संक्रान्ति परत्वेन गृहद्वार निश्चयः ॥ कुंभेऽर्के फाल्गुने मासि श्रावणे कर्क सिंहयोः ॥

मु॰ग॰ पौषेनक्र गृहंकुर्यात पूर्व पश्चिमदिङ्मुखम् ॥ ५७ ॥ मार्गेतुलालिगे भानौ वैशाखे वृषभा-
१६१ जयोः ॥ दक्षिणोदिङ्मुखंश्रेष्ठं मन्दिरंनष्टमन्यथा ॥ ५८ ॥ अथात्रकैश्चिद्गृहारम्भे विशेष-
उक्तः ॥ मेषे १ चैत्रे वृषे २ ज्येष्ठे आषाढे कर्कटे रवौ ॥ सिंहे ५ भाद्रपदे तौलि ७ कन्याश्विकार्ति-
केलिगे ॥ ५९ ॥ पौषेनक्रे तथा माघे मकरे १० कुंभ ११ गेपिच ॥ प्रकुर्यान्मन्दिरे विद्वान्नन्यैः
कैश्चिदितीरितम् ॥ ६० ॥ कृष्णापक्षादयो मासा विज्ञेयाह्यत्र सूरिभिः ॥ ६१ ॥ अथ गेहे मु-
खार्थे तिथि विचारः ॥ पूर्णिमाद्या नवत्याज्यास्तिथयः प्राङ्मुखे गृहे ॥ कृष्णापक्षेनवम्य-
द्या उत्तराभिमुखेतु षट् ॥ ६२ ॥ पश्चिमाभिमुखे हेया दशाद्यास्तिथयोनव ॥ शुक्लेषट्च
नवम्याद्यास्त्याज्या दक्षिणा दिङ्मुखे ॥ ६३ ॥ अथ ध्रुवादि षोडश गृहाणि ॥ ध्रुवं १ धान्यं२
जयं ३ नन्द ४ खरं ५ कांतं ६ मनोरमम् ७ सुमुखं ८ दुर्मुखं ९ चोग्रं १० रिपुदं ११ वित्तदंतथा१२
नाश १३ आक्रंद १४ विपुलं १५ विजयं १६ चेति षोडश ॥ ६४ ॥ अथ ध्रुवादि गेह ज्ञानम् ॥
दिक्षु पूर्वादितश्चन्द्र १ नेत्रां २ भोधि ४ गजे ८ मिताः ॥ गेहाद्यत्र भवेच्छालस्तदंकाः कथि- १६१
ताइमे ॥ ६५ ॥ शालाशांकयुतिः सैकाज्ञेयं गेहं ध्रुवादिकम् ॥ ६६ ॥ अथ ध्रुवादि गेहेनामा

क्षरसंख्या ॥ आद्यस्तं दशमं विश्वं १।२।३।४।५।६।१०।१३ मंदिरं द्व्यक्षराभिधम् ॥ शेषा-
णि त्र्यक्षराणि ८।९।११।१२।१४।१५।१६ स्युः सप्तमम् ७ चतुरक्षरम् ॥ ६७ ॥ अथ ध्रुवा-
दि गेहज्ञानार्थं प्रस्तारः ॥ चत्वारो गुरवः स्थाप्या लघु माद्यं गुरोरधः ॥ विन्यस्याऽग्रे यथा चो-
र्ध्वं तथा शेषं प्रपूरयेत् ॥ ६८ ॥ एवं भूयो लघोः पश्चात्पूरयेद्गुरुभिः पुनः ॥ एकमेवासक-
त्कार्यं यावत्स्युर्लघवोऽखिलाः ॥ ६९ ॥ प्रादक्षिण्येन गेहस्य मुखाच्चालिन्द संज्ञकम् ॥
लघुस्थान स्थिते चैवं भेदाः प्राच्यास्तु षोडश ॥ ७० ॥ अथ प्रकारांतरेण प्रस्तारः ॥ लिखेदे-
कांतरादाद्ये एकमेकं गुरुं लघुम् ॥ द्वयं द्वयं द्वितीये तु चतुरश्चतुरस्त्रिके ॥ ७१ ॥ अष्टावष्टौ
चतुर्थेऽयं प्रस्तारः षोडशावधि ॥ ७२ ॥ अथ गेहारम्भे लग्न बलविचारः ॥ द्वि १ स्वभाव
स्थिरे लग्ने शुभैर्व्ययांत्यगैर्ग्रहैः ॥ पापैस्त्र्यायारिगैः कुर्यान्मन्दिरारंभणं बुधः ॥ ७३ ॥ अथ
गेहारम्भे शुभयोगाः ॥ लग्ने १ गुरौ रवौ षष्ठे ६ द्यूने ७ ज्ञे भार्गवे सुखे ४ ॥ मन्दे त्रिगे ३ द्यातं ति-
ष्ठेन्मन्दिरं शरदां शतम् १०० ॥ ७४ ॥ तनौ १ शुक्रे सह ३ स्थेऽर्के षष्ठे भौमे सुते ५ गुरौ ॥ समारब्धं
गृहं तिष्ठेद्दाय नानां शतद्वयम् २०० ॥ ७५ ॥ सूर्य्ये लाभ ११ गते शुक्रे तनौ नभसि १० चन्द्रजे ॥

गेहं वर्षशतायुष्यं २०० निर्मितं नृवरैर्भवेत् ॥ ७६ ॥ चतुर्थे वाक्पतौ लाभे ११ भौमे मन्दे च-
खे १० विधौ ॥ अशीतिहायनायुष्यमारब्धं मन्दिरं स्मृतम् ॥ ७७ ॥ शुक्रे स्वोच्चे १२ तनौ १
वापि जीवे पाताल ४ गेऽथवा ॥ लाभगे ११ वा शनौ स्वोच्चे १२ संपद्युक्तं गृहं चिरम् ॥ ७८ ॥
लग्न १ स्थे स्वर्क्षगे चन्द्रे केन्द्रे जीवेऽथ खेचरैः ॥ स्वोच्चमित्रांशगैर्गेहं लक्ष्म्या युक्तं स्थिरं भ-
वेत ॥ ७९ ॥ अथ नेष्टयोगः ॥ नीचांशस्थैस्तथा खेटैर्निर्धनं मन्दिरं हितत् ॥ खेटश्चैकोपि
खे १० द्यूने ७ परांशस्थोऽथमध्यतः ॥ ८० ॥ कुर्याद्गेहं परायत्तं लग्नेशो यदि निर्बलः ॥ ८१ ॥
अथ नक्षत्रविशेषेषु सत्सु फलम् ॥ पूर्वाषाढोत्तरा पुष्ये राश्लेषा रोहिणी मृगं ॥ जीवयुक्ते
गुरोर्वारे गेहं धान्यसुतप्रदम् ॥ ८२ ॥ पूर्वाषाढा मघा हस्त पुष्य मूलांत्यगे कुजे ॥ कुजेऽह्नि
निर्मितं गेहं भस्मसादग्निना भवेत् ॥ ८३ ॥ उफा हस्ताश्विनी चित्रा रोहिणी मृगगे बुधे
बुधेऽह्नि मन्दिरारम्भः सुखपुत्रार्थसिद्धये ॥ ८४ ॥ भरणी स्वात्यनूराधा ज्येष्ठा पूभाह्वये
शनौ ॥ शनिवारे कृतं गेहं रक्षोभूतयुतं भवेत् ॥ ८५ ॥ अथ द्वारशाखारोपः ॥ अश्वि- १६३
न्यासुत्राहस्त पुष्य श्रुति मृगेषु च ॥ रोहिण्यां स्वाति भेंत्ये च द्वारशाखां प्ररोपयेत् ॥ ८६ ॥

अथ द्वार चक्रम् ॥ सूर्य्यभाद्वेदभैः ४ शीर्षे संस्थितैर्धनसम्पदः ॥ गृहस्थो द्वास्तनंतरा
दष्टभिः कोणसंस्थितैः ॥ ८७ ॥ शाखास्वष्टमिते २० स्तस्माद्धनं सौख्यं भवेद्गृहे ॥ देहल्यां
तु त्रिभिर्धिष्ण्यैर्मृत्युर्गृहपतेर्भवेत् ॥ ८८ ॥ चतुर्भि २४ र्मध्यगैस्तस्माद्द्रव्यलाभं सुखं भवेत् ॥
एतच्चक्रं विचार्यादौ द्वारं कुर्य्यात्स्वमन्दिरे ॥ ८९ ॥ अथ राशिपरत्वेन द्वारस्य दिङ्निर्णयः ॥
मीना १२ लि ८ कर्क ४ राशीनां गेहं प्राङ्मुखमीरितम् ॥ कन्या मिथुन ३ नक्राणां शस्तं द-
क्षिणादिङ्मुखम् ॥ ९० ॥ तुला वृषभ कुम्भानां पश्चिमाभिमुखं स्मृतम् ॥ उदङ्मुखं धनुर्मे-
ष सिंह राशि भुवां तथा ॥ ९१ ॥ अथ गवाक्ष निर्णयः ॥ पूर्वोदितान्य शस्तासु गवाक्षं दिक्षु
कारयेत् ॥ ९२ ॥ अथ द्वारस्य तिर्य्यङ्ज्ञान प्रदेश निर्णयः ॥ आयामेन वधा भक्तो द्वारमेकांश
मानतः ॥ प्राच्यां तुर्य्ये तृतीये वा रुद्र कोणा द्विधीयते ॥ ९३ ॥ याम्यां षष्ठे चतुर्थे वा तुरीये-
ऽथ पञ्चमे ॥ उदीच्यां च प्रतीच्यां वा सव्यमार्गेण धीमता ॥ ९४ ॥ अथ द्वारस्योच्चता ॥
गेहोच्चस्य चतुर्थांशो द्विगुणो द्वार उच्छ्रयः ॥ ९५ ॥ अथ गेहोच्चम् ॥ विस्तारः षोडशो भाग-
श्चतुर्भिर्यः करैर्युतः ॥ गेहोच्चं तन्मितं ज्ञेयं न्यूनाधिक्यमसत् स्मृतम् ॥ ९६ ॥ अथ द्वारा-

द्वारवेधविचारः ॥ कोणा मार्गभ्रमसिंहद्वारं कर्दमस्तम्भ भूरुहे ॥ देवालय प्रकूपानां वेधो-
द्वारेश संमुखे ॥ ९७ ॥ अथ वेधापवादः ॥ गेहोच्चे द्विगुणाधिक्ये प्रांतरे संस्थिते सति ॥ १४०
नैव कोणेषु वेधः स्याद्भित्ति मार्गांतरेपि च ॥ ९८ ॥ अथ षोडश गृह निर्माणम् ॥ प्राच्या-
स्तु क्रमतः स्नान १ पाक २ शय्या ३ युधस्य च ४ भोजनस्याऽ५ न्न ६ भांडार ७ देवतानां गृहाः
८ स्मृताः ॥ ९९ ॥ मथनाज्य पुरीषाख्य विद्याभ्यास शुचां क्रमात् ॥ रति भैषज्ययोः सर्व-
धान्यस्ते मध्यगाः गृहाः ॥ १०० ॥ अल्पत्वेवा भुवः शक्तेः स्नानादींश्च गृहान् बुधः ॥ शक्ते-
र्भुवोऽनुसारेण प्रकुर्वीत यथारुचि ॥ १०१ ॥ उलूखलांबुस्थानं च तथा तुल्यादिकं तथा ॥
क्षालनं पित्तपादानां गेहाद्दक्षिणतः शुभम् ॥ १०२ ॥ अथ कूपखननप्रदेशः ॥ पुष्टि १ रैश्व-
र्य वृद्धि १ रपुत्रनाशो १०१ स्रतिः स्त्रियः ॥ स्रतिः ५ संप ६ द्विपो र्भीतिः ७ सौख्य ८ मीशान-
तः क्रमात् ॥ १०३ ॥ गेहस्य मध्य भागेऽर्थनाशः कूपे कृते भवेत् ॥ १०४ ॥ अथेष्टकारम्भः
१४० सुधालेपश्च ॥ उत्तरा श्रवणा पुष्ये ज्येष्ठांत्ये रोहिणी करे ॥ स्थिरेंऽगेऽर्के गुरौ मन्द इष्टकारंभ- १६५
माचरेत ॥ तथा गेहे सुधालेप इष्टकारंभ मादिषु ॥ १०५ ॥ अथ ग्रहोपकरणां वह्नि हत्यंच ॥

पूभार्द्रा रोहिणी पुष्य उत्तरा त्रितये शुभे ॥ स्थितिर्महान सस्येस्टा गेहोय कर्त्तोः सह २०६
अथ चित्रारम्भः ॥ हस्तत्रये ऽनुराधांत्ये मृगे ऽश्विन्यां श्रवत्रये ॥ पुनर्भे रोहिणी पुष्ये पूर्वाषाढा- १५५
मिश्रेतया ॥ २०७ ॥ नन्दायांच शुभेवारे प्रकुर्याद्राजवेश्मनि ॥ चित्रंनाना भिधं रम्यं शील्या-
रामायणां विना ॥ २०८ ॥ अथ गृहांगणे शुभ वृक्षाः ॥ पुन्नागश्चंपको ऽशोकः पिप्पली-
दाडिमी शमी ॥ बकुलस्तिलको द्राक्षा पिचुमन्दो मरोजया ॥ २०९ ॥ नारिकेलं तथा जाती।
पाटला रोहमल्लिका ॥ मल्लिका पूग बन्धूका पनसः सरसी रुहम् ॥ एते गृहांगणे वृक्षाश्रा-
रोप्या मंगल प्रदाः ॥ २१० ॥ अथ गेह प्रदेशात्प्रति दिशं वृक्षा रोपणम् ॥ न्यग्रोधं रोपयेत्प्रा-
च्यां गेहाद्याम्यां दुदुंबरम् ॥ उदग्दिशि च कर्कंधुं प्रतीच्यां कुंजराशनम् ॥ २११ ॥ अथ गृहां-
गणे अशुभा वृक्षाः ॥ मातुलिंगस्नुहीरंभा हरिद्रा च मुनिद्रुमः ॥ एते दुःखप्रदा गेहे संजाता
रोपिता अपि ॥ २१२ ॥ अथ केषां चिन्मते सर्वेपि वृक्षा अंगणे अशुभाः ॥ केचिदूचुर्न चारो-
१५५ प्योनिजवास गृहांगणे ॥ कोपि वृक्षोयतः स्वर्णाद्रुमोपि न शुभों ऽगणे ॥ २१३ ॥ अथ पुर- २६६
ग्राम प्राकारादीनां निर्माणो सूत्र साधनम् ॥ प्राकार पत्तन ग्राम निर्मितौ सूत्र साधनम् ॥ प्रशस्तं

मु.ग. स्याच्छुभे काले गेहारंभोक्तभादिषु ॥ २२४ ॥ अथ देवालय मठाद्यारम्भः ॥ गृहारम्भोक्त-
१६७ नक्षत्रैर्मठं कुर्य्यात्तु साश्विकैः ॥ सर्वदेवालयं तैस्तु पुनर्भश्रवणान्वितैः ॥ २२५ ॥ अथ जैन्या-
लय प्रपादर्शनारम्भः ॥ पूर्वार्द्रा भरणी धिष्ण्ये रोहिण्यां च स्थिरोदये ॥ शुभाहे जैन्य गे-
हस्य प्रपादर्शः कृतिः शुभा ॥ २२६ ॥ इति श्री महदेवज्ञ रावल हरिशंकर सूरि सूनु गणपति-
कृते मुहूर्तगणपतौ वास्तु प्रकरणं समाप्तम् ॥ १८ ॥ ॥ अथ गृह प्रवेश प्रकरणम् ॥ ॥
प्रवेशं नव गेहस्य कुर्यात्सौम्यायने नृपः ॥ प्रारम्भोदित मासेपि कृत्वा प्राग्वास्तु पूजनम् १
माघ फाल्गुन वैशाख ज्येष्ठाः शस्ता नवे गृहे ॥ प्रवेशे श्रावणो मार्गः कार्तिकोपि प्रशस्य-
ते ॥ २ ॥ पुनर्विनिर्मिते जीर्णे गृहे प्युक्त स्तथैव हि ॥ आवश्यके प्रवेशे नो कुर्यादस्त विचारण-
म ॥ ३ ॥ अनुत्तरेचाऽनुराधायां रेवत्यां रोहिणीद्वये ॥ चित्रायां प्रविशेद्गेहं द्वारभे तु विशेषतः
॥ ४ ॥ अथ जीर्ण गृह प्रवेशः ॥ धनिष्ठा द्वितये पुष्ये त्र्युत्तरे रोहिणीद्वये ॥ चित्रास्वात्यनु-
राधायां प्रविशेज्जीर्ण मन्दिरम् ॥ ५ ॥ अथ प्रवेशेऽन्यनक्षत्र फलम् ॥ श्रवणादित्रये ऽश्विन्यां
स्वात्यां पुष्ये तथा करे ॥ पुनर्वसौ पुनर्यात्रा राज्यनाशो मघाभिधे ॥ ६ ॥ पूर्वात्रये भरण्यां च वि- १६७

शाखायांवधूक्षयः॥ ज्येष्ठाश्लेषाख्यमूलार्द्रकुमारोनाशमाप्नुयात्॥ ७ ॥ कृत्तिकायांदहे-
द्गेहं प्रवेशेनवमन्दिरे॥ तथा यात्रा निवृत्तौ च भूपानां फलमीदृशम्॥ ८ ॥ अथ वार फलम्॥
गुरुशुक्रबुधाख्येषु वारेषु च सुखार्थदम्॥ प्रवेशेतुशनौस्थैर्यं किंचिच्चौरभयं भवेत्॥ ९ ॥ अथ
प्रवेशेत्याज्याः॥ चैत्रोमासः कुजार्कौ चरिक्तादग्धास्त्वमावृतिः॥ दुष्टचन्द्रश्चसेत्याज्यानव-
गेहप्रवेशने॥ १० ॥ अथ लग्नबलम्॥ चरेलग्ने चरांशस्थे प्रवेशोनशुभावहः॥ शुभांशेन-
युतेचोपचयस्थेतुचरेपिसन्॥ ११ ॥ शुभैः केन्द्रत्रिकोणाय द्विगैराय त्रिषष्ठगैः॥ पापैःशु-
द्धेऽष्टमेतुर्ये विजनुर्भाष्टमेंऽगके॥ १२ ॥ शुभेभकूटके गेहे विधायाऽग्रेद्विजन्मनः॥ जलपूर्णं
घटं कृत्वा मांगल्येन गृहं विशेत्॥ १३ ॥ रन्ध्रा ८ त्मज ५ कुटुंबाया ११ त्पंचमे भास्करेस्थिते॥
पूर्वाशादिगृहेश्रेष्ठं क्रमाद्द्वारासुतोरविः॥ १४ ॥ अथ गृहद्वारवशात्तिथयः॥ प्रवेशेप्राङ्मु-
खेपूर्णानन्दायाम्यमुखेशुभा॥ भद्राप्रत्यङ्मुखेऽथोदङ्मुखे गेहेतथाजया॥ १५ ॥ अथगेहे
तत्प्रवेशेचविशेषः॥ वेश्मकृत्यंदिवाशस्तं प्रवेशोरजनौक्वचित्॥ मर्तांद्वर्केबलेयात्राह्राद-
प्रयाणभृगौनिशि॥ १६ ॥ अथ गृहप्रवेशकलशचक्रं॥ अर्कभाद्भमितेचक्रेवह्निदाहःप्रवे- १६९

शाने ॥ उद्वासोऽब्धि मितैः ४ प्राच्यांयाम्यांलाभोऽब्धिसंमितैः ॥ १७ ॥ पश्चिमेऽब्धि १३
मितैर्लक्ष्मी रुदग्वेद १७ मितैः कलिः ॥ नाशो युग २१ मितैर्मध्येऽधः कंठे त्रित्रिभैः २७ शुभ
म् ॥ १८ ॥ अथ तदेव स्पष्टयति ॥ भान्यष्टौ ८ सूर्य्य भात् ५ षष्ठा ह्यविंशाच्चैव भानिषट् ॥ कु
म्भचक्रे वरिष्ठानि गेहं प्रविशतां नृणाम् ॥ १९ ॥ अथ प्रवेशे विधिः ॥ अथोक्त समये राजा वि
तानैस्तोरणैर्युतम् ॥ वेद मंगल निर्घोषैः संप्रविश्य गृहं शुभम् ॥ २० ॥ शिल्पिनं गणितज्ञंच
विधिविज्ञं पुरोधसम् ॥ पूजयेच्च यथा देवं हेम रत्नैस्तथाम्बरैः ॥ २१ ॥ अथ द्विविधः प्रवेशः ॥
अपूर्वो नव गेहादौ प्रवेशो मुनिभिः स्मृतः ॥ सपूर्व्वस्तु प्रवेशान्ते पूर्वा पूर्व इतः परः ॥ २२ ॥
आरम्भोदित भैर्भूपैः कार्य्यः पूर्वः प्रवेशकः ॥ पूर्वाऽपूर्वोऽश्विनी मूल श्रवोपेतैः करस्थितैः
॥ २३ ॥ सपूर्वस्तूत्तरा चित्रानुराधा रेवती मृगे ॥ रोहिण्यां कथितः प्राज्ञैः प्रवेशस्त्रिविधो गृ
हे ॥ २४ ॥ इति वास्तु पूजनादिकं विना प्रवेशो न कार्य्यः ॥ जातु न प्रविशेद्धीमाननाच्छन्नं
नवं गृहम् ॥ कपाट रहितं तद्वद्वास्तु पूजन वर्जितम् ॥ २५ ॥ अथ वास्तु पूजनम् ॥ श्रवत्रय मृ
गे मूलेऽनुराधान्त्येकर त्रये ॥ पुनर्भेऽप्युत्तरे पुष्ये रोहिण्यामश्विभे तथा ॥ २६ ॥ वास्त्वारम्भर्चे

नंशस्तं बलिदानपुरःसरम् ॥ २७ ॥ अथ नवदुर्गपुरप्रवेशः ॥ रोहिणी रेवती हस्तत्रये पुष्ये
श्रवत्रये ॥ अनुराधोत्तरे नव्ये पुरे दुर्गप्रवेशनम् ॥ २८ ॥ अथ जितस्य शत्रोः पुरप्रवेशः ॥ विशा-
खा कृत्तिका धूमोत्तराषाढाऽभिधे तथा ॥ शनौ वार्के जितस्यारेर्विजयी नगरं विशेत् ॥ २९ ॥
इति श्री महैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्त गणपतौ गृह प्रवेश प्रकरणं
समाप्तम् ॥ १९ ॥ ॥ अथ देवालयादि प्रतिष्ठा प्रकरणम् ॥ प्रासादारामयोः कार्या प्रतिष्ठा
चोत्तरायणे ॥ तथा जलाशयारामोत्सर्गः शस्तो विचैत्रके ॥ १ ॥ चैत्रो मासः प्रतिष्ठायां म-
ध्यमः कैश्चिदीरितः ॥ शुक्लपक्षेऽनुराधान्त्ये पुनर्भे रोहिणी मृगे ॥ २ ॥ श्र . त्रयोत्तरा हस्तत्रये
पुष्ये विधौ शुभे ॥ वारनक्षत्रतिथिषु मूर्तीनां स्थापनं स्मृतम् ॥ ३ ॥ विष्णावादिदेव मुख्यानां
विलग्ने शुभ लौकिके ॥ ४ ॥ अथ देवता विशेषेण नक्षत्र विशेषः ॥ विष्णोः पूर्वोदिते भेनु-
राधा चित्रा द्वयोदिते ॥ रोहिणी श्रवणा ज्येष्ठा पुष्ये चाभिजितीरितम् ॥ ५ ॥ विधिवासवयोः
१० सस्यक्प्रतिष्ठापनमार्यकैः ॥ भानोर्हस्तेऽनुराधायां कुबेरस्कन्दयोरपि ॥ ६ ॥ मूले दुर्गादि- 
कानां च श्रवणे सुगतस्य हि ॥ रेवत्यां धर्महेरंब फणि प्रथम रक्षसाम् ॥ ७ ॥ यक्ष भूतासुरा-

गांच वाग्देव्याः स्थापनं स्मृतम् ॥ व्यासागस्त्य गुहादीनां च वाल्मीकेः पुष्य भे तथा ॥ ८ ॥
यत्र सप्तर्षयो यांति धियाये तेषांतु तत्र च ॥ सर्वेषामेव रोहिण्या मुत्तरा त्रितये तथा ॥ धनि-
ष्ठायां दिगीशानां प्रतिष्ठापन मीरितम् ॥ ९ ॥ अथ देवता विशेषे लग्न विशेषः ॥ सिंहे सू-
र्य्यः शिवो द्वन्द्वे लग्ने स्थाप्यः स्त्रियां हरिः ॥ कुम्भे वेधाश्चरे क्षुद्राद्यंग देव्यः स्थिरे खिलाः ॥
१० ॥ अथ वार फलम् ॥ प्रतिष्ठोग्रा तथा क्षेमा वह्निदा वरदा दृढा ॥ आनन्द दायिनी कल्य-
स्थायिन्यर्कादि वासरे ॥ ११ ॥ अथ देवता विशेषे मास विशेषः ॥ याम्यायनेपि वाराह मा-
तृ भैरव वामनान् ॥ महिषासुरहंत्रीं चन्द्रसिंहं स्थापयेद्बुधः ॥ १२ ॥ श्रावणे स्थापयेल्लिंग-
माश्विने जगदम्बिकाम् ॥ मार्गशीर्षे हरिं चैव सर्वान् पौषेपि केचन ॥ १३ ॥ अथ प्रतिष्ठा-
यां लग्न बलम् ॥ केन्द्र कोणाद्विलाभस्थैः शुभैः पापैश्च सेन्दुभिः ॥ आयारिगैः सुतैश्वर्य्य-
प्रसादे वा प्रतिष्ठिताः ॥ १४ ॥ इति श्री मद्दैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते-
मुहूर्त गणपतौ जलाशयाराम देवता प्रासाद प्रतिष्ठा प्रकरणं समाप्तम् ॥ २० ॥ ॥ अथ- २७१
मिश्र प्रकरणम् ॥ तत्रादावंग स्फुरण फलम् ॥ अंग स्फूर्त्ति फलं वक्ष्ये दक्षिणांग समुद्भवम्

पुरुषाणां तु तज्ज्ञेयं वाम भागे मृगीदृशाम् ॥ १ ॥ पृथ्वीलाभः शिरः स्थाने स्थान लाभो ललाटके ॥ प्रियाप्तिः स्याद्भ्रुवोर्मध्ये भ्रुवोर्युग्मे सुखं महत् ॥ २ ॥ शुभावार्ताश्रुतिः कर्णौ लोचने प्रिय दर्शनम् ॥ दृक्कोण भागयोर्लक्ष्मी रथः पक्ष्मणि संजयः ॥ ३ ॥ गंड देशे स्त्रिया सौख्यं नासायां गन्धजं सुखम् ॥ उत्तरोष्ठे तु वाग्वाद श्चुंबनञ्चाऽधरे स्त्रियाः ॥ ४ ॥ हनुदेशे भयं ज्ञेयं मुखे मधुर भोजनम् ॥ भूषाप्तिः कराठदेशे स्याद्ग्रीवायां रिपुजं भयम् ॥ ५ ॥ ज्ञेयः पराजयः पृष्ठे स्कन्धे मित्र समागमः ॥ प्रियाप्तिर्बाहुदेशे स्यान्मध्ये बाह्वोर्धनागमः ॥ ६ ॥ द्रविणाप्तिः करे विद्याद्विजयं वक्ष सि ध्रुवम् ॥ प्रमोदश्च बलं कट्यां पार्श्वे प्रीति मनुत्तमाम् ॥ ७ ॥ स्थानात्प्रचलनं नाभौ कोशवृद्धि रथांत्रके ॥ कोशाप्ति रुदरे नार्या जघने पति संगमः ॥ ८ ॥ स्फिग्गुदे वाहनाप्तिः स्याल्लिंगे योषित्समागमः ॥ वृषणे पुत्र लाभः स्याभ्युदये वस्तिदेशके ॥ ९ ॥ उरू सद्वास सांप्राप्ती रिपु सन्धिस्तु जानुनि ॥ क्वचिद्धानिस्तु जंघायां स्थानाप्तिश्चरणोपरि ॥ १० ॥ पादाधो लाभदं ज्ञेय मंगस्फूर्तिफलं त्विदम् ॥ वामे पुंसां फलञ्चैतत् १७२
द्बुधैर्ज्ञेयं विपर्ययात् ॥ ११ ॥ नारीणां दक्षिणांगे स्यादंग प्रस्फुरणे तथा ॥ स्वथांगेतिलो-

त्पत्तौ कंडूत्यां चेदमेव फलम् ॥ अंगस्फूर्तिसमा ज्ञेया लाञ्छनं मशकास्तिला: ॥ १२ ॥ कं-
डूतिर्दक्षिणे पाणौ नृपाणां जयदा स्मृता ॥ अन्येषां लाभदा पादतले गमनकारिणी ॥ १३ ॥
अथ पल्लीपतनफलम् ॥ तत्र शुभाशुभतिथिवारनक्षत्राणि ॥ भूनेत्रा १।२ ग्नि ३ शरा ५ ऽङ्ग ६
शा १० विश्वा १३ दित्ये १२ श ११ संमिता: ॥ तिथय: शुभदा: पल्लीपाते ऽन्यास्त्वशुभा म-
ता: ॥ १४ ॥ सौम्यवारा: शुभा: प्रोक्ता: पापा दुष्टफलप्रदा: ॥ पुष्याश्विरोहिणीद्वन्द्वपुन-
र्भफाकरत्रयम् ॥ १५ ॥ धनिष्ठान्त्यानुराधाख्यं शतभञ्च शुभप्रदम् ॥ इतो ऽन्यद्भं निषि-
द्धं स्यात्पल्लीपाते तथा नृणाम् ॥ १६ ॥ दक्षिणांगे ऽखिले पुंसां वामांगे तु मृगीदृशाम्
नाभौ हृद्युदरे चैव मस्तके हनुवर्जिते ॥ १७ ॥ पल्लीपात: शुभो ज्ञेयस्ततो ऽन्यत्र न शोभन:
यत्फलं पतने पल्ल्या: शरटारोहणे पितत् ॥ १८ ॥ शरटस्य प्रयाते च पल्ल्या रोहे तथा ऽ-
फलम् ॥ स्नातव्यं स्पर्शने पल्ल्या: शरटस्य सवाससा ॥ १९ ॥ जन्मर्क्षे मृत्युयोगे ऽह्नि दग्धे
विष्ट्यादिदूषिते ॥ लग्ने पापयुते चन्द्रे ऽष्टमे ऽरिष्टं प्रजायते ॥ २० ॥ तत्र शान्तिं जपं होमं
रुद्रं मृत्युंजयादिकम् ॥ पञ्चगव्ययुतं स्नानं कुर्यादाज्यावलोकनम् ॥ २१ ॥ अथ स्वस्था-

रिष्टज्ञानम् ॥ यस्य सूर्य्य स्वरोजस्त्रं षोडशाहं वहेत्तदा ॥ सद्योमृत्युस्ततोन्यूनेन्यूनाह मि-
तिमासके ॥ २२ ॥ एवं वामस्वरे सौख्यं तयोर्नाशो मृतिः क्षणात् ॥ यस्य सूर्य्यायते चन्द्रः
सूर्य्यश्चन्द्रायते सदा ॥ २३ ॥ अहोद्वयं त्रयं तस्य षण्मासाभ्यन्तरे मृतिः ॥ निःप्रभं भा-
स्करं पश्येन्म्रियते दशभिर्दिनैः ॥ २४ ॥ जाग्रत्यपश्यति यः स्वप्नं सोपि वर्षेन जीवति ॥
नविंदेत्कर्णघोषं यो नासाग्रे रसना भ्रुवम् ॥ २५ ॥ मेढ्रं वामं न पश्येद्यः षण्मासान्न स
जीवति ॥ मणिबन्धं ललाटस्थं यदि सूक्ष्मं न पश्यति ॥ २६ ॥ यो दुर्गन्धिर्विना हेतुं निः
श्रीकोवाऽतिदीप्तिमान् ॥ कृशांगः स्थूलदेहः स्यात्स्रस्तकेशनखोपिवा ॥ २७ ॥ स्वच्
छाया मे क्षणो वापि मासयुग्मं न जीवति ॥ ध्रुवं विष्णोः पदं चैवारुन्धतीं मातृमण्डलम् ॥
२८ ॥ भूगोलं चन्द्रमं चिह्नमपश्यन्नैव जीवति ॥ कफो मज्जति यस्याप्सु पंकादौ खंडितं
पदम् ॥ २९ ॥ स्नातस्य प्राग्उरः शुष्येद्भूमालिः स्याच्च मूर्धनि ॥ नोसुभुक्तोधृतिं धत्ते स्थू-
१८ लदेहः कृशोथवा ॥ ३० ॥ विपर्यासः स्वभावस्य नोमाम्नास्ये शुलित्रयम् ॥ ३१ ॥ अथ सं-
ग्रामे अशुभचिह्नम् ॥ जिह्वाशोषः प्रकंपश्च ताम्बूले रागहीनता ॥ वर्णः सगांक्षदो यस्य-

तस्य मृत्युर्ध्रुवो भवेत् ॥ ३२ ॥ अथ युद्धजयलक्षणम् ॥ प्रफुल्लितभुजश्चैव रोमांची स्थिर-
हृग्भटः ॥ धैर्योपेतः समुत्साही विजयी सरणो भवेत् ॥ ३३ ॥ अथ छायापुरुषदर्शनप्र-
कारस्तत्फलम् ॥ प्रातः पृष्ठगते सूर्ये स्नात्वा प्रत्यङ्मुखो नरः ॥ सम्पूर्णावयवं नं चेत्सं-
मुखे श्वेतमीक्षते ॥ ३४ ॥ यावदब्दं सुखं क्षेमं विजयं प्राप्नुयात्तदा ॥ दृष्टे तस्मिन् शिरोही-
ने मासषट्कं सजीवति ॥ ३५ ॥ विकर्णे हायनं चैकं व्यंसे चेन्मास सप्तकं ॥ सरन्ध्रहृदये सप्त
दशमासान्विहस्तके ॥ ३६ ॥ विपार्श्वे निष्पुरस्केद्वौ व्यास्ये मासं हि जीवनम् ॥ द्विदेहद-
र्शने मृत्युः सद्य एव न संशयः ॥ ३७ ॥ अथ प्रकारान्तरेण फलम् ॥ मित्रनाशो विपादे च
बन्धुनाशो विबाहुके ॥ आत्मनाशो विशीर्षे स्यात्सर्वाभावे कुलक्षयः ॥ ३८ ॥ दुर्भिक्षं
रक्तवर्णे द्वेषो कर्बुरे च पराङ्मुखे ॥ विद्रूरं धूम्रिते कृष्णे भिन्ने छिन्ने विनाशनम् ॥ ३९ ॥ पीतर-
जोऽरुणे हानिः कृष्णे मृत्युः प्रजायते ॥ द्वितीये मासषट्केन त्रिभिर्मासैस्तृतीयके ॥ ४० ॥
अथ स्वप्नदर्शनम् ॥ आद्ययामे निशि स्वप्नो वर्षेण फलदो भवेत् ॥ ४१ ॥ प्रातः सद्यफलः
स्वप्नस्तः स्वप्याश्चेन्नरः ॥ रोगचिन्तोद्भवा व्यर्थाश्चिरपाकादि वीक्षणम् ॥ ४२ ॥ अथ-

सु.भा. शुभदः स्वप्नाः ॥ सद्राजा ब्राह्मणा देवाः सिद्धगन्धर्वकिन्नराः ॥ शुरुः श्वेतांबरानारीते-
२७६ यामासीच्च दर्शनम् ॥ ४३ ॥ प्रासादगजशैलानां श्वेतोक्षासनवाजिनाम् ॥ दर्शनं रोहणं-
लाभः सिंहस्यारोहणं तथा ॥ ४४ ॥ छत्रध्वजसुवर्णाब्जरत्नरौप्यदधीनि च ॥ यवगोधूमसि-
द्धार्थाः फलं दीपश्च कन्यका ॥ ४५ ॥ क्षीरखण्डाक्षतदूर्वेक्षुदर्पणाः पुष्पितद्रुमाः ॥ लाभेवा
दर्शने चैषां लाभः सौख्यं भवेद्यशः ॥ ४६ ॥ भोजनं रोदनं वीणावादनं नौप्ररोहणम् ॥ अ-
गम्यागमनं विष्टालेपनं शस्तमीरितम् ॥ ४७ ॥ आरूढो यो हि जागर्ति स पुष्पफलितं द्रु-
मम् ॥ दंष्ट्रः श्वेताहिना दक्षे करे स्यात्स महाधनः ॥ ४८ ॥ रुधिरस्नानपानञ्च सर्पदंशो
न्नतिर्निजा ॥ शय्याहर्म्याङ्गनानाञ्च ज्वलनं स्वशिरश्छिदा ॥ ४९ ॥ रक्तस्रावो जलैः
स्नानं मरणं मांसभक्षणम् ॥ सुरायाः प्रायशः पानं प्रशस्तं पायसाशनम् ॥ ५० ॥ कद-
लीकल्पवृक्षाश्च तीर्थं गंगादिकं सरित् ॥ तोरणं भूषणं राज्यं स्वान्नैश्च ग्रामवेष्टनम् ॥
५१ ॥ देववाक्यादि निर्घोषो गर्ताग्निःसरणं तथा ॥ दंशो वृश्चिक कीटानां तडागोद्यानद- २७६
र्शनम् ॥ ५२ ॥ पीतं रक्तं फलं पुष्पं स्वप्ने प्राप्नोति यो नरः ॥ लभते सोचिरात्स्वर्णं पद्मरागम-

र्तिं तथा ॥ ५३ ॥ जयोद्भूते रणे वादे पुरुहूतध्वजेक्षणम् ॥ आत्मनो बन्धनं शीर्षं बाह्वोरातं-
त्यमुत्तमम् ॥ ५४ ॥ अभिषेके करी विप्रो देवो वा छत्रधारणम् ॥ कुरुते महिषी व्याघ्री गोसिं- १८८
हीस्तन्यपानकम् ॥ ५५ ॥ स्वनाभौ तृणवृक्षांबु पुष्पाणां मुद्गवस्तया ॥ भुवो भूमिधरस्यापि क्र-
मणोत्क्षेपणो शुभे ॥ ५६ ॥ मणिसौवर्णरौप्याणां पात्रेवां भोजिनीदले ॥ योऽश्नाति पायसं स्व-
प्ने स राज्यमधिगच्छति ॥ ५७ ॥ गौर्लिंगी ब्राह्मणो राजा पिता मित्रञ्च देवता ॥ यद्ददेत्तादृक्
त्स्वप्नेत तथैव प्रजायते ॥ ५८ ॥ पूजितं शिवलिंगञ्च देवता वा यथाविधि ॥ स्वप्ने हृष्टाः प्रय-
च्छन्ति नराणां विपुलं धनम् ॥ ५९ ॥ त्यक्त्वा तत्कारणिकार्यां संश्रयेत बुधः शुभं मतम् ॥ सर्वं क्र-
याणमस्त्वित्वा गोदेवांश्च राजद्विजान् ॥ ६० ॥ अथाऽशुभस्वप्नाः ॥ तैलाभ्यक्तोथ दिग्वासा-
आरूढो महिषं खरम् ॥ उष्ट्रं कृष्णादृषं वाऽश्वं याम्यां गच्छन्न जीवति ॥ ६१ ॥ पाकस्याने व-
ने रक्तपुष्पाढ्ये सूतिकागृहे ॥ विकलांगो विशेत्स्वप्ने सोऽसुभिर्विप्रयुज्यते ॥ ६२ ॥ जतुकौं-
१८८ कुमसिन्दूरादिधातवो यस्य मन्दिरे ॥ पतंति तरुतस्तस्य गेहदाहश्च चौरभीः ॥ ६३ ॥ नाभेरन्यत्र- १७७
गात्रेषु तृणपुष्पद्रुमोद्गमः ॥ खरोष्ट्रकपिसर्पाद्यैर्यानं स्नेहस्य भक्षणम् ॥ ६४ ॥ कलुषेणांबु

नामख्या कर्दमे गोमयेन च॥ स्नेहे नव पुष्पो लेपः कर्दमे विनिमज्जनम् ॥ ६५ ॥ पातो हृदन्तह-
स्तस्य जिह्वाया श्चत्रयं तथा ॥ एते शोक प्रदाः स्वप्ना दृष्टा हानिकराश्चपि ॥ ६६ ॥ स्वप्ने सन्दो-
लनं गीतं क्रीडितं स्फोटितं तथा ॥ हसितं भर्त्सितं स्रोतोवहानी रह्यधो गतम्॥ ६७ ॥ सूर्य्येंदुरव-
ज ताराणां पातः स्वस्य चितावपि ॥ रज्ज्वाच्छेदः शिरो भागे कांस्य वर्णास्य धारणम् ॥ ६८ ॥
प्रवेशो जननी गर्भे दुष्कर्मेंतच्च रिष्टदम् ॥ करवीरमशोकं च लता पाशेन बन्धनम् ॥ ६९ ॥ का-
षाम्बर धरा योषा लिंगनं मृत्युकारकम् ॥ आरुह्य पुष्पितान्वृक्षान्यो विं चिंत्य निजं वसुः॥
७० ॥ भूषयत्य तरौः पुष्पैः सोपि प्राणैर्वियुज्यते ॥ घृत रक्ताम्बर श्लिष्टो हत्या माप्नोति मा-
नवः ॥ ७१ ॥ यस्तु धूमोय मात्मानं व्याप्तं धूमेन चेद्यदा ॥ भस्माज्य लोह लाक्षञ्च स चलस्या
वियुज्यते ॥ ७२ ॥ क्रोष्टु कुक्कुट मार्जार गोधा वभ्रु भुजंगमाः ॥ मक्षिका वृश्चिका दंशा दृष्टाः-
स्वप्नेन शोभनाः ॥ ७३ ॥ रत्न द्रव्या शुधो पान च्छय्या भूषास्व योषिताम् ॥ वस्त्रादि प्रियवस्तू-
नाम पहारोऽर्थनाशकः॥७४॥ विवाहोत्सवयोः शोको भ्रंशो वानरव केशयोः ॥ कराद्यवयवानां 
तु छेदने स्वात्मनाशनम् ॥ ७५ ॥ वपनं श्मश्रु केशानां नेत्र रुक् पतनं तथा॥ कूप गर्त दरी-

मु·ग ध्वांत विवरेषु न शोभनम् ॥ ७६ ॥ कपोत श्येन गृध्राद्या ऋक्ष कौशिक वायसाः ॥ शृगा-
१७६ लमार्जारकश्वानो दृष्टाः स्वप्ने सुशोभनाः ॥ ७७ ॥ शष्कुली कृशरा श्वारा गुडा यूपादि भक्ष
णाम् ॥ गोमयं चोष्णा पानीयं स्वप्ने पीतं न शोभनम् ॥ ७८ ॥ रक्ते पुरीष मूत्रे वा स्रवन्मृत्यु-
मवाप्नुयात ॥ रक्त काषायाणि वासांसि काषायाणि च बिभर्ति यः ॥ ७९ ॥ पितृ कार्य्यं प्रकुर्वा
णो म्रियते स न संशयः ॥ भूत प्रेत पिशाचाद्यैः श्वपचैः सह संगतः ॥ ८० ॥ आहतो वाय
तैर्यान्यां स्वल्पाहैर्म्रियते तु सः ॥ दृष्टिं यो कालजां पश्येत्स्वप्ने सोपि विनश्यति ॥ ८१ ॥ अह
र्य्यं दिवसं रात्रिं विचन्द्रां गत तारकाम् ॥ सीस पित्तल कस्तार कांस्य ताम्राज्य संचयः ॥ ८२ ॥
शुष्क वृक्षौषधं शिल्पीं दृष्टा श्चैतेन शोभनाः ॥ प्रासाद छत्र भूभ्राणां शिखराणां ध्वजस्य च
॥ ८३ ॥ पतनं शत्रु चापस्य नृपराष्ट्र विनाशनम् ॥ तारां कोलाहलाह्वान निन्दा क्रोशादि-
संश्रवान् ॥ ८४ ॥ विंद्याद्राज भयं दंष्ट्रि शृंगि कीशाद्य भिद्रवान् ॥ ८५ ॥ अथ स्वप्नस्य फल
व्यवस्था ॥ ये दृष्टाः स्वं प्रति स्वप्नास्वस्यैव फलदाश्च ते ॥ परं प्रति च ते तस्य फलदाः किंचिदा- १७६
त्मनि ॥ ८६ ॥ अथ दुष्ट स्वप्न दर्शने दोष शांतिः ॥ दुष्टे त्वालोकिते स्वप्ने निवेद्य ब्राह्मणाय

च ॥ आशीर्भिस्तोषितोविप्रैः पुनः स्वप्यान्नरेश्वरः ॥ ८७ ॥ नब्रूयाच्च पुनः स्वप्नंसस्नाया-
त्सुरायवारिणिः ॥ कार्य्योमृत्युंजयोहोमः शान्तिः स्वस्त्ययनादिकम् ॥ ८८ ॥ सेवाश्वत्थ
गवांशातदानंस्वर्णादिशक्तितः ॥ श्रवणंभारतादीनां स्वप्नदोषनिवृत्तये ॥ ८९ ॥ बृहस्प
तिप्रणीतञ्च स्वप्नाध्यायं पठेदपि ॥ ९० ॥ अथोत्पाताः ॥ उत्पातास्त्रिविधाज्ञेयादिव्य-
भौमांतरिक्षजाः ॥ तेषुदिव्यास्तथाऋक्षध्वजादावंतरिक्षजाः ॥ ९१ ॥ भूमौभौमः क्रमादु-
ग्रमध्यमाल्पफलप्रदाः ॥ ९२ ॥ अथोत्पातानांसंग्रहः ॥ भूमिकंपोदिशांदाहोनिर्घातो
धूलिविभ्रमम् ॥ उल्कापातस्तुरुच्छेदनभसोवृष्टिरश्मनाम् ॥ ९३ ॥ अन्धकारोदिवावि-
द्युत्पातोयर्तुविपर्य्ययः ॥ विकृतिप्रसवोजंतोरवीन्द्वोश्चविपर्य्ययः ॥ ९४ ॥ ग्रहाणांवायुति-
र्युद्धंत्वकालेयच्चजायते ॥ वर्षाकालेविनाबिंबेरवीन्द्वोः परिमण्डलम् ॥ ९५ ॥ अकस्माच्छुभ-
स्यलार्द्रत्वंस्वग्रासग्रहणद्वयम् ॥ बालस्त्रीद्विजवर्याणांवधः पीडाजनस्यच ॥ ९६ ॥ प्रा-
सादस्यचदेवस्यध्वंसः घातोध्वजस्यच ॥ ध्वजवक्रातिचारस्थाः सर्वेवास्वर्क्षगाः खगाः
॥ ९७ ॥ सर्वेप्येकर्क्षगाःखेटाश्चकर्क्षेशनिवाक्पती ॥ शुक्लपक्षेस्वगोस्तोदयोवाकेतुदर्शी

नन् ॥ ९८ ॥ मुसलं खगपंक्तिस्थं द्व्यादि चन्द्रार्कदर्शनम् ॥ चुल्ल्यामग्न्युद्भवो कस्माज्ज्वले
धूमादिकं भवेत् ॥ ९९ ॥ उलूखल घरट्टादि चलद्विस्फोटनेपिवा॥प्रतिमायाः प्रकंपोवाहसनं
रोदनं तथा ॥ १०० ॥ भुवोविवरमित्याद्या उत्पातास्त्व परेपिच ॥ ग्रन्थान्तराच्च ते ज्ञेयाः फल-
मेयां प्रवक्ष्यय ॥ १०१ ॥ अथोत्पात फलज्ञानाय चतुर्विध मण्डलम् ॥ कृत्तिका भरणीपु-
ष्य मघा पूभा विशाखिका ॥ पूर्वा फाल्गुनिके तानि भानि सप्ताग्नि मण्डलम् ॥ १०२ ॥ मू-
लाश्लेषा शतार्द्रान्त्योत्तरा भाद्रपदा तथा ॥ पूर्वाषाढाभिधे तानि सप्त वारुण मण्डलम् ॥
१०३ ॥ पुनर्भो फाश्विनी हस्त त्रितयं मृगशीर्षकम् ॥ वायुमण्डल संज्ञानि भानि सप्तस्मृ-
तानिच ॥ १०४ ॥ अभिजिच्चोत्तराषाढानुराधा श्रवण द्वयम् ॥ ज्येष्ठा च रोहिणी भानि स-
प्त चन्द्रस्य मण्डलम् ॥ १०५ ॥ भूकंपादि महोत्पातो जायते यत्र मण्डले ॥ तत्तत्स्वभावजं द्र-
व्यं जन्तून्देशांश्च पीडयेत् ॥ १०६ ॥ वाय्वग्नि मण्डलोद्भूता अनिष्टाः परिकीर्तिताः ॥ १०७ ॥
अथोत्पातानां फलानि ॥ प्रजाभीतिर्भुवः कंपेनिर्घाते भूपतेर्मृतिः ॥ अवर्षणं च दिग्दाहेदु-
र्भिक्षं धूलिवर्षणे ॥ १०८ ॥ महर्घं चाश्मनां वृष्ट्या उल्का पाते जनक्षयः ॥ राज्ञां नाशस्तु रु-

च्छेदे विद्युत्पातेंऽवुशोषणम् ॥ २०९ ॥ अस्तौ विपर्यये रोगो दिवाध्वांत ः प्रजाक्षय ः ॥ राजवि-
घ्नकरोजन्तोर्विकृतः प्रसवोमत ः ॥ ११० ॥ रवींद्वोश्च विपर्यासे घोरोभवति विग्रहः ॥ युद्धे
युद्धं खगेन्द्राणां संयुतौ च महर्घता ॥ १११ ॥ रवींद्वो ः परिधौ दूरे फलं चान्यत्र मण्डले ॥ मध्य
मंस्थीयदेशोस्यादन्य देशो नदुष्यति ॥ ११२ ॥ द्वित्रि मण्डलके तद्वत्त त्तत्स्थान निवासिनाम्
छिन्ने खण्ड फलं चातिदूरे नास्ति फलं त्विदम् ॥ ११३ ॥ श्वेते भयञ्च पीते रुग्वृष्टिर्नीलेऽरु-
णेरणः ॥ कपोते भूपक्षयो धूम्रेर्नीहार ः परिधौ भवेत् ॥ ११४ ॥ प्राट्टट् कालं विनान्यत्र प-
रिधिश्चतदात्विदम् ॥ तस्मिन्काले तु वृष्टिः स्यात्परिधौ स्फसिते सिते ॥ ११५ ॥ अकाले फ-
लपुष्पाणामुदये धान्य नाशनम् ॥ स्थलाद्द्रौत्वे स्थले वृष्टिर्महती परिकीर्तिता ॥ ११६ ॥ स्त्री
बधे चातिदुर्भिक्षं विप्रबाल बधे पितत ॥ देवध्वंसे वृतहेशो राजध्वंस ः प्रजायते ॥ ११७ ॥ सर्व-
ग्रासे ग्रहे सर्व वस्तूनां च महर्घता ॥ दुर्भिक्षं कुरुते खेटा भौमाद्यावक्रगामिन ः ॥ ११८ ॥ अ-
तिचारगता ः सर्वे स्वर्क्षे स्वोच्च गता अपि ॥ ज्ञेया भव फलाश्चैक राशिस्था देशनाशका ः ११९ 
स्याता मस्तो दयौ शुक्ले पक्षे चेद्भार्गवस्य च ॥ राजयुद्धं तदा घोरं वृष्टिः स्यात्तु निरंतरम् ॥ १२० ॥

मु॰म॰ जीवार्कपुत्रयोर्योगे दुर्भिक्षं विग्रहस्तथा ॥ संग्रामश्चापि दुर्भिक्षं जायते मुसलोदये १२१ ١٨٣
१८३ अथ केतवः ॥ मुसलाकृतिधूम्राभदीर्घपुच्छनिभाश्चये ॥ तथाश्वेतशिखाकारा विद्य-
त्स्रोतोनिभास्तथा ॥ १२२ ॥ इत्याद्याः केतवः १०० सर्वराष्ट्रभंगकरा मताः ॥ धूम्रकेतूद-
ये मृत्युर्जायते पृथिवीपतेः ॥ १२३ ॥ शिखास्रोतोनिभाः केचिच्छोभनाः परिकीर्तिताः ॥
सितः स्निग्धोल्पको दीर्घः शीघ्रास्ते च शुभप्रदाः ॥ १२४ ॥ वह्निभीरंबुरक्ताभे कृष्णावर्णो
मृतिप्रदः ॥ शत्रुध्वजसमो नेष्टो धूम्रवर्णोपि तद्विधः ॥ १२५ ॥ नेष्टो द्वित्रिचतुःशूलीत्यु-
त्पातः कथितो बुधैः ॥ रक्तपंक्तिनिभे स्वर्णवर्णो प्रागपरोदये ॥ १२६ ॥ नृपनाशस्तथै-
शान्यां तैलाक्षे च महर्घता ॥ नाशकृत्कथिता स्त्र्यग्नस्त्र्यस्रोऽर्था तारकाप्रभः ॥ १२७ ॥ क
बन्धसदृशो याम्यां दुःखदो भूमिचारिणाम् ॥ यावद्दिवसमुत्पातः समुदेति नभस्तले १२८
तावन्मासं फलं धत्ते मासे वर्षाणि संवदेत् ॥ १२९ ॥ अथोत्पाताः ॥ आरण्याः पशवो ग्रामं
चेद्विशंति निजेच्छया ॥ कुरुते जनशून्यं तं मुल्लकोपि गृहं विशेत् ॥ १३० ॥ वल्मीकमिंद्र- १८३
١٨٣ जालं वायसस्य सद्मनि जायते ॥ तदा गेहपतेर्नाशः कपोते वा गृहं गते ॥ १३१ ॥ छ्यादिचन्द्रार्क-

मु.ग. बिंबेस्याद्रोगो भीतीररणोम्हतिः ॥ गृहहा भावे फलं नेष्टं कज्यादि जीवे तु शोभनम् ॥ १३२ ॥ खर-
१८४ राशि विवरे देशे नृपनाशो रिपोर्भयम् ॥ त्रयोदश दिनैः पक्षो यस्मिन् वर्षे भवेत्तदा ॥ १३३ ॥ प्रजा
नाशोऽथ दुर्भिक्षं तथा भूमि भुजां क्षयः ॥ १३४ ॥ अथ निर्घातस्वरूपं तत्फलञ्च ॥ प्रचंडवात
संजात निर्घात पतनम्भुवि ॥ पक्षिदीप्ते रुते नेष्टं नृपहा भास्करोदये ॥ १३५ ॥ निर्घातश्च राड-
शब्दोऽथ गच्छंस्तां नाशये द्विशाम् ॥ द्विजान्क्षत्रिय वैश्यांश्च हन्याद्यामक्रमाद्दिवा ॥ १३६ ॥
अस्ते चैवांत्यजानर्थान प्रहरेस्व यथा क्रमात् ॥ यामिन्यां धान्य पैशाचान् हन्याच्चैव तुरंगमान्
॥ १३७ ॥ अथोल्का लक्षणं तत्फलञ्च ॥ खराशि प्राणि संचारा घोर सत्त्वा विनिर्मिता ॥ तट-
त्तडद्वा विद्युज्ज्वलन्ती दीर्घवक्र पात ॥ १३८ ॥ अल्पपुच्छाग्निभा धिष्ण्या द्विहस्ताया समी-
पगाः ॥ तिर्यगूर्ध्वंगताश्वेता रक्ता तन्वी तु तारका ॥ १३९ ॥ उल्का तु विविधाकारा कृष्णा पुच्छा
तिदारुणा ॥ १४० ॥ अथ दिग्दाह फलम् ॥ दिग्दाहः पीतवर्णश्चेद्भूमि पालं निहंति सः ॥ अग्नि-
वर्णो निजं देशं वर्णानुत्तरतः क्रमात् ॥ १४१ ॥ धूम्रोऽल्प शस्यतां कुर्यात् कृष्णो देशं तु निर्मलः ॥ १८४
प्राच्यां भूमि भुजं हन्यादीशान्यां विदिशः क्रमात् ॥ १४२ ॥ वैश्यान् शिल्पिजनाश्चौरान् तुरगा-

मु.ग. नेकमतस्तथ ॥ निशिस्वर्णाग्निभः सव्यवायौ रवे विमले शुभः ॥ १४३ ॥ अथ भूकंपफलम् ॥ १८०
१८५ भूकम्पोयामतो वर्णांक्रमाद्धन्याद्दिवानिशम् ॥ वायुमण्डलजो भूपशस्याम्बुमराध्वंतथा १४४
ग्रामाद्रमुदकं वह्नि मंडलोत्थानि हंतिहि ॥ इन्द्रमंडलजो भूपांस्तथा गुर्जरदेशकान् ॥ भूपालां
श्चीनदेशांश्च प्रचेतो मंडलोद्भवः ॥ १४५ ॥ अथ रजोदर्शन वृष्टिः ॥ रजश्चेच्छादयेद्ग्राम प्रमुखा
न्नृपतींस्तदा ॥ भवन्ति दिशि धूम्राभेतस्मिन्नृपयोरुजां भयम् ॥ १४६ ॥ रजः सूर्योदये व्योम
च्छादयेच्चिह्नहंतदा ॥ तदा रोगाः प्रभूताः स्युर्निशामेकान्तु भूपतेः ॥ १४७ ॥ नित्यं रात्रिद्वयं नै
रन्तं सुद्वयं त्रिचतुर्दिनम् ॥ पञ्चाहं चेद्वयं घोरमृते कालञ्च शैशिरम् ॥ १४८ ॥ अथ गांधर्वनगरं
तत्फलम् ॥ गांधर्वनगरं हन्ति वर्णान् श्वेतादिवर्णकम् ॥ क्रमात्पूर्वदिशो भूपामात्यसैन्यपुरो-
हितान् ॥ १४९ ॥ सद्रजं निर्धनं कुर्यादायुधाग्निनिभं भयम् ॥ अथैषामुत्पातानां फलपाक-
समयः ॥ षड्भिर्मासैर्भुवः कम्पे जायते फलमुक्तवत् ॥ दिग्दाहे विकृतौ भूतौ केतु निर्घातयो-
१८० स्त्रिभिः ॥ १५० ॥ रजोग्निवर्षणो सद्य उत्पातेऽन्यत्र हायनात् ॥ १५१ ॥ अथ वृष्टि विकृतिस्त- १८५
त्फलम् ॥ अकाले तुङ्गपार्तिश्च सप्ताहं हत्य भ्रकेयिच ॥ वर्षणो वाऽब्रजो वृष्टौ नैःस्वं मासादिभि-

र्द्धतिः ॥ १५२ ॥ भयमंगारके धान्यैः फलाद्यैः स्यान्न संशयः ॥ देशनाशः सुकोष्णाम्बु रक्त-
स्पर्शो प्रजायते ॥ १५३ ॥ दीप्ते सूर्य्ये प्रतीपास्या च्छाया चेदीतितो भयम् ॥ इन्द्रचापेऽतिवृष्टिः
स्याद्व्योम्नि चराडांशुदीपिते ॥ १५४ ॥ अथ पक्षिमृगादिविकृतिस्तत्फलंच ॥ ग्राम्यारण्या-
स्तथा नीरस्थलजाद्युनिशाचराः ॥ प्राणिनो व्यत्ययं याताः स्वचक्रं पीडयंत्यमी ॥ १५५ ॥
संध्याकाले हि दीनायां दिशां मार्गे पतत्त्रिणः ॥ क्रोशंति जम्बुकादीना संघाद्दूरे चतद्दिशि ॥
१५६ ॥ विहगा वियति व्यस्त चक्रायांत इतस्ततः ॥ कुक्कुटोऽस्ते च रौर्नक्तं हेमन्ते रौति कोकिलः
॥ १५७ ॥ खराः श्वानोऽयवा स्वैरं प्रक्रीडन्ति परस्परम् ॥ इत्यादि विकृतौ चक्रे पीडा भवति भू-
यसी ॥ १५८ ॥ अथान्येऽप्यशुभदा उत्पाताः ॥ अस्थि क्षिपति गेहे श्वा संमुखो स्ते च रोदिति ॥
यस्य तद्गेहनाशः स्यात्परमासाभ्यन्तरे तदा ॥ १५९ ॥ रौति सूर्य्योदये श्वा चेद्ग्रामांते सूर्य्यदि-
ङ्मुखः ॥ भूपनाशस्तदा चास्ते ह्यधीशा नाशमाप्नुयुः ॥ १६० ॥ स्तम्भद्वारनिपातश्चेद्धूमोत्पत्ति
र्विनाग्निना ॥ युध्यंते बालकाः स्वैरं काष्ठलोष्टैः परस्परम् ॥ १६१ ॥ तदा भूपभयं घोरं विज्ञेयं
दीर्घदर्शिभिः ॥ अंगना बालका माता ब्रुवते यत्स्वभावतः ॥ १६२ ॥ सत्यं तज्जायते यस्माद्गूढा-

 चेयं सरस्वती ॥ अथोत्पातदोषापवादः ॥ स्वस्वशांत्या महाजस्या विनश्यन्ति च सर्वशः ॥
 सप्ताहाभ्यन्तरे हस्त्या शुभया वा न दुःखदा ॥ १६३ ॥ अथोत्पातानामुपसंहाराः ॥ शान्तिश्च 
धूमकेतुश्च दिग्दाहो भूमिकम्पकः ॥ भुवोगर्तश्च निर्घात उल्कापातादयोऽपरे ॥ १६४ ॥ य-
स्मिन्देशे प्रजायंते महोत्पाता महाभयाः ॥ प्रजापीडा भवेत्तत्र विनाशः पृथिवीपतेः ॥ १६५ ॥
तदा शान्तिर्विधातव्या देशे ग्रामे पुरेऽखिलैः ॥ शान्त्या दोषा विनश्यन्ति त्वन्यथाऽरिष्टमद्भु-
तम् ॥ १६६ ॥ अथ काकस्पर्शफलम् ॥ मस्तके वाय संस्पर्शे दारिद्र्यं मरणं कालिः ॥ कट्यां-
स्कन्धे महाभीतिरिष्टं चैव प्रकीर्तितम् ॥ १६७ ॥ योषितां मस्तके भर्तुर्विनाशो वासुतस्य च ॥
१६८ ॥ अथ कदाचित्काकस्पर्शेऽपि दोषाभावः ॥ हस्तोधो वाथ सिंहान्नं भक्षेद्दध्यादि योगतः
काकस्पर्शो न दोषाय कस्माच्चेद्दूषणं तदा ॥ १६९ ॥ षण्मासाभ्यन्तरे मृत्युः काकमैथुनदर्शने
तद्दोषशान्तये काकशांतिं कुर्याद्द्विजसत्तमाः ॥ १७० ॥ कपोतो वायसः पल्ली शरटो मूर्ध्नि चे-
 त्पतेत् ॥ षण्मासाभ्यन्तरे तस्य स्वामिनो वा मृतिस्तदा ॥ १७१ ॥ इत्युत्पातलक्षणफलम् ॥ अथ 
छिक्काफलम् ॥ औषधेऽध्ययने वादे वाहने शयनेऽशने ॥ बीजावापे बुधैः प्रोक्तं शोभनं सप्तसु-

सुतम् ॥ १७२ ॥ मृत्युर्वह्निभयं हानिस्तुष्टिर्द्रव्यागमः सुखम् ॥ क्लेशोर्थागमनं प्रोक्तं दिक्षु छि-
काफलं क्रमात् ॥ १७३ ॥ यस्मादङ्कसंख्यकास्तातो विज्ञेयश्च पृथक् पृथक् ॥ अत्रोदाहरणं यथा ॥ आ-
द्येर्धप्रहरे प्राच्यां द्वितीयेऽग्निदिशः क्रमात् ॥ तृतीयो याम्यदिग्भागे फलमुक्तं विचक्षणैः ॥
१७४ ॥ अथार्घकाण्डः ॥ तत्रादौ वर्षराजादि सप्तनाय विचारः ॥ चैत्रे मासि सिते पक्षेऽर्कोद-
ये प्रतिपत्तिथौ ॥ यो वासरः स राजा स्यात्तस्मिन्वर्षे ततः फलम् ॥ १७५ ॥ मेषेऽर्कस्य प्रवेशो यो
वारः मंत्री स कथ्यते ॥ चापे धान्यपतिर्ज्ञेय आर्द्रायां जलदाधिपः ॥ १७६ ॥ रसाधिपस्तुलायां
स्यात्कर्के सस्यपतिस्तथा ॥ मकरे स्वर्णरत्नादिनिरसेशो बुधैः स्मृतः ॥ १७७ ॥ अथ विंशोप-
कानयनम् ॥ शाके त्रि ३ भे हृते शैले ७ र्लब्धं स्थाप्यं पृथक् पृथक् ॥ शेषं द्वि २ घ्नं शरै ५ र्युक्तं वर्षं
स्याच्च ततः पुनः ॥ १७८ ॥ लब्धं शाकं प्रकल्प्यैवं कर्तव्या प्रोक्तवत्क्रिया ॥ धान्यं २ तृणं ३ ततः
शीत ४ मुष्णा ५ मारुत ६ वृष्टयः ७ ॥ नाशोथ ८ विग्रह ९ श्चैवं जायते क्रमशस्त्विमे ॥ १७९ ॥ अथ
सर्वनिष्पत्तिधर्मसत्यञ्च ॥ वर्षादिनवकस्याथ योगो दशाहतेयुतः ॥ लब्धं निष्पत्तिरत्काख्या । १८८
सार्धार्धं धर्मसत्यके ॥ १८० ॥ अथ क्षुदानयनम् ॥ शाके सप्तयुगोनं नन्दे ९ र्भक्ते लब्धं तु तत्क्वचित्

मु॰ग॰ निधाय द्विगुणां शेषं सैकं क्षुत्त्यात्ततः पुनः ॥ १८१ ॥ लब्धं शाकं प्रकल्प्यैवं कर्त्तव्या प्रोक्तव-
१८९ त्क्रिया ॥ तृषा २ निद्रा ३ तथालस्य ४ मुद्यमः ५ शान्तिरेवच ॥ १८२ ॥ क्रोधो ७ दंडो ८ थमि-
त्रत्व ९ मुत्सवः १० पाप ११ पुण्यके १२ ॥ १८३ ॥ अथ प्रकारान्तरेण क्षुदानयनम् ॥ शाकेवेदै-
४ र्हृते शैले ७ र्भक्ते लब्धञ्च पूर्ववत् ॥ शेषंच द्विगुणां सैकं १ क्षुधा १ तृषा २ सुषुप्तिका ३ ॥ १८४
आलस्य ४ मुद्यमः ५ शान्तिः ६ क्रोधो ७ लाभो ८ थ भेस्कः ९ ॥ दंडो १० थ मैथुनं ११ चौर्यं १२
रसनिष्पत्ति १३ रेवच ॥ १८५ ॥ फलनिष्पत्ति १४ रुत्साहः १५ पुण्यं १६ पापं १७ तथैवच ॥
सर्वनिष्पत्ति १८ रित्येवं संपत्तिश्च १९ यथाक्रमात् ॥ १८६ ॥ अथोग्रत्वाद्यानयनम् ॥ शाक-
श्चास्त्र गुणाः खेटै ९ र्भक्ते लब्धंच पूर्ववत् ॥ द्वि २ घ्नं शेषं त्रिभि ३ र्युक्त मुग्रत्वंच रसोद्भवः ॥ १८७ ॥
फलोत्पत्तिस्तथा व्याधी ४ रोगनाश ५ स्तथैवच ॥ आचार ६ श्चाप्यनाचारो ७ स्तति ८ र्जन्म ९
ततः परम् ॥ चौरोपशमनं १० वह्नेर्भीति ११ रग्निशमः १२ क्रमात् ॥ १८८ ॥ अथ शाल-
भाग्यानयनम् ॥ शाके त्रि ३ घ्ने हृते नंदै ९ र्लब्धं स्थाप्यतदुक्तवत् ॥ द्विघ्नं २ शेषं त्रिभि ३ र्युक्तं शा- १८९
लभो मूषकस्तथा ॥ १८९ ॥ दैविकं पीत ताम्रंच चक्रंच परचक्रकम् ॥ १९० ॥ अथ प्रकारांतरे-

णशालभाग्यानयनम् ॥ शैल ७ घ्नोनव ९ हृच्छाकः शेषं द्वि २ घ्नं युतं त्रिभिः ३ ॥ शालभो १ मू-
षको २ दैवं ३ पीतं ४ ताम्रं ५ स्वचक्रकम् ६ ॥ परचक्रागम ७ श्चैवं क्रमाद्ज्ञेयं च पूर्ववत् ॥ १९१ ॥
अथोद्भिजादि प्राणाया नयनम् ॥ शाके वाणैर्नगैरर्कैरीशै ५।७।१२।११ र्निघ्ने पृथक्पृथक् ॥ स-
म भक्ते वशेषं यद्द्वि २ घ्नं पंच ५ युतं क्रमात् ॥ १९२ ॥ उद्भिजः १ स्वेदज २ श्चैव जरायुः ३ श्च भवोऽण्डजाः
४ ॥ १९३ ॥ अथ युगानां प्रमाणम् ॥ द्वात्रिंशद्भिः सहस्रैश्च युक्तं लक्ष चतुष्टयम् ॥ प्रमाणं क-
लिवर्षाणां प्रोक्तं पूर्वं महर्षिभिः ॥ १९४ ॥ युगानां कृतमुख्यानां क्रमान्मानं प्रजायते ॥ कले
र्मानं क्रमान्निघ्नं चतु ४ स्त्रि । ३ द्वि २ मितैस्तदा ॥ १९५ ॥ कृतमानम् १७२८००० त्रेतामानम् १२९६०००
द्वापरमानम् ८६४००० कलिमानम् ४३२००० महायुगप्रमाणम् ४३२००० ॥ अथ गतकलि-
मानम् ॥ खगशैलेंदुरामा ३१७९ द्ये शाकेऽब्दास्ते कलेर्गताः ॥ तैर्विहीनं कलेर्मानं शेषे शेष-
कलेर्मितिः ॥ १९६ ॥ अथ धर्मानयनम् ॥ खाभ्रखाभ्रांकवेदै ४९०००० श्च कलिशेषसमायु-
तिः ॥ कलिमानेन संभक्ताद्यल्लब्धं धर्मराशयः ॥ १९७ ॥ अथ प्रकारांतरेण धर्मज्ञानम् ॥ शा-
काब्दं च युतं जीवराशिभिरुद्धृते शाके ॥ लब्धं पुण्यं च तन्न्यूना विंशत्रिः पाप मुच्यते ॥ १९८ ॥

मु.ग. अथायव्ययानयनार्थे ध्रुवांशकाः॥ रसा ६ स्तिथ्यो १५ गजाः ८ शैलचन्द्रा १७ नन्देन्दव १९ स्तथा ।श।
१९१ स्वर्गा २१ दिशः १० क्रमाज्ज्ञेया रव्यादीनां ध्रुवाङ्कमे॥ १९९॥ अथ मेषादिराशीनामायव्ययाः॥
निजराशिपतेर्वर्षस्वामिनो ध्रुवयोगके॥ त्रि ३ घ्ने बाणा ५ युते भक्ते तिथिभिः शेषसंमिताः २००
आयास्तु त्रि सुरा ३ लब्धे शरा ५ ढ्या स्तिथि १५ भिर्हृते॥ शेषे व्ययाः क्रमात्तैस्य राशीनां कथिता
बुधैः॥ २०१॥ अथ शाकात्सुभिक्षादिज्ञानम्॥ शाके त्रि ३ घ्ने युते बाणैः ५ शैलै ७ र्भक्ते ऽथ शेषके॥ क्र-
मान्नाख्यं सुभिक्षं च २ दुर्भिक्षं ३ च सुभिक्षकम् ४॥ २०२॥ महर्घं ५ समता ६ ज्ञेया चैकतो वै खे सुखम्
२०३॥ अथ संवत्सरात्सुभिक्षादिज्ञानम्॥ त्रि ३ घ्ने संवत्सरैर्युक्ते शरै ५ र्भक्ते ऽथ सप्तभिः ७॥ चतु-
र्द्वित्रिमिते ४।२।३। शेषे सुभिक्षं विपुलं भवेत्॥ २०४॥ त्रि ३ पंचके ५ च दुर्भिक्षं षड् ६। १ संख्ये च
मध्यमम्॥ शून्ये तु रौरवं ज्ञेयं फलं वर्षे बुधैः स्मृतम्॥ २०५॥ अथ प्रकारान्तरेण संवत्सरात्॥ द्वि २
घ्नः संवत्सरो रामै ३ र्हीनो भक्तो नगै ७ स्ततः॥ शेषे बाणा ५ मिते युग्मे २ सुभिक्षं हायने भवेत् २०६
वेदे चन्द्र ४।१ मिते ज्ञेयं दुर्भिक्षं खे ० तु रौरवम्॥ रसा ६ नल ३ मिते मध्यमं तदर्धं फलं बुधैः॥ २०७॥ १९१
अथ वर्षे राजादीनां संक्षेपात्फलम्॥ राजा वैमादिकानां च वच्मि संक्षेपतः फलम्॥ गुरुभु-

केंद्रवोऽधीशास्संति चेज्जन सौख्यदाः ॥ २०८ ॥ सुभिक्षं शोभना वृष्टिर्देशे स्वास्थ्यं प्रकुर्वते ॥ शा-
नि भौमौ प्रकुर्वाते दुर्भिक्षं विग्रहे भयम् ॥ २०९ ॥ अल्प सौख्य प्रदः सौम्यः खलु दुःख प्रदो रविः
फलं सविस्तरं चैषां विज्ञेयं संहितादिषु ॥ २१० ॥ तथा प्रभव मुख्यानां हायनानां पृथक् पृथक् ॥
नाऽस्माभिर्लिख्यते चात्र ग्रंथ विस्तार भीतितः ॥ २११ ॥ अथ दीपमालिका योगेन वर्षफलम् ॥ द-
र्शे चायुष्मति स्वातौ पापाह्ने मासि कार्तिके ॥ प्रदाये चेत्प्रजा पीडा राजयुद्धाद्युपद्रवाः ॥ २१२ ॥ अ-
थ ज्येष्ठ प्रतिपदि योगः ॥ ज्येष्ठ शुक्ले तिथावाद्ये चन्द्रेज्य भृगुवासरे ॥ २१३ ॥ अथाषाढ द्वितीया
नवमी योगः ॥ आषाढे शुक्ल पक्षे च द्वितीया नवमी दिने ॥ चन्द्रेज्य भृगुवाराश्चेत् सुवृष्टिश्च सम-
र्घता ॥ २१४ ॥ बुधे साम्यं रवौ तापः कुजे वृष्टिर्न जायते ॥ शनिवारे प्रजापीडा दुर्भिक्षं रौरवं तदा ॥
२१५ ॥ अथ शनिचार फलम् ॥ गुर्जरजे १ शनौ पीडा प्रभासे च वृषस्थिते २ ॥ मरुस्थले च युग्म
र्क्षे ३ कर्के काश्मीर मंडले ॥ २१६ ॥ शाकंभरस्थे च सिंहर्क्षे ५ कन्यास्थे ६ मालवे तथा ॥ तुलादि-
१९२
११५ त्रितये पृथ्व्यां दुर्भिक्षं जनपीडनम् ॥ सुभिक्षं मकरे कुंभे मीने १२ सर्वप्रजासुखम् ॥ २१७ ॥ अथ कूर्म-
चक्रम् ॥ कूर्म चक्रे शनिर्मध्ये ततः प्राच्यादिषु क्रमात ॥ न्यस्यते क्रमतोऽशान कृत्तिकाद्यं त्रि-

 

भिस्त्रिभिः ॥ २१८ ॥ निजाधिष्ठितभैर्देशानन्तर्वेदिमुखां ३ स्ततः ॥ मागधांश्च ६ कलिंगादी ९
नवंतिकमुखांस्तथा १२ ॥ २१९ ॥ ततः कौंकणपौंड्रादी १५ न्सिन्धुसौराष्ट्रकादिकान् १८ ॥ पौ-
लिन्द चीनकाद्यां २१ श्च कुरुकाश्मीरमत्स्यकान् २४ ॥ २२० ॥ खलबाह्लिकलालाटा २७ न्नक्षत्र
निमांस्तथा ॥ दृष्ट्वा स्वाधिष्ठिताद्देशादन्यांश्च यमदिग्गतान् ॥ २२१ ॥ अथ शनिचारप्रसंगाच्छ-
निचक्रम् ॥ शनिभान्यानि वक्त्रेक १ मुखेऽथो वेदभै ४ र्जयः ॥ भुजे दक्षे ततः षड्भि १० रंघ्रे १३ श्च
भ्रमणं ततः ॥ २२२ ॥ भुजे वामेऽब्धिभै रोगो १७ हस्त्यैः शरसितैः २० श्रियः ॥ त्रिभि २३ भैर्मस्तके
राज्यं नेत्रे ह्युडु द्वये २५ सुखम् ॥ भद्वये २७ गुह्यगे मृत्युः शनिचक्रे फलं क्रमात् ॥ २२३ ॥ अथ ग्रह-
चारवशान्महर्घादि ॥ सर्वधान्यं महर्घं स्याच्छुक्रक्षेत्रगते कुजे ॥ राहौ मन्दे च दुर्भिक्षं शुभचन्द्र-
ग्रहस्थिते ॥ २२४ ॥ बुधर्क्षे भास्करे चन्द्रे विरोधो धरणीभुजाम् ॥ तत्रार्कनन्दने चन्द्रे सर्वधान्यम-
हर्घता ॥ २२५ ॥ शनौ राहौ शनिक्षेत्रे तदा भावात्पशुक्षयः ॥ विरोधो भूभुजां भौमे वृष्टिः स्या-
 द्भूयसी बुधे ॥ २२६ ॥ कुजर्क्षे राहुमन्दाभ्यां नश्यंति पशवो नराः ॥ महर्घं भृगुपुत्रेण शेषैः खेटैः फलं 
शुभम् ॥ २२७ ॥ क्रूरा वक्रगताः खेटाः सौम्यायद्यतिचारगाः ॥ तदा भूपक्षयं युद्धं जगद्घोरभयार्द-

नम् ॥ २२८ ॥ अथ प्रतिमासं महर्घज्ञानाय चन्द्रोदयज्ञानम् ॥ ऊर्ध्वभागे तु विज्ञेया राहुराशि-
प्रकोष्ठकाः ॥ तिर्यग्भागे तु विज्ञेया रविराशिप्रकोष्ठकाः ॥ २२९ ॥ चक्रे तत्रार्कराह्वोश्च घटिकाः
परिकीर्तिताः ॥ प्रोचुर्दर्शघटीः षष्ठ्या ६० शेषा घट्यो युतास्तथा ॥ २३० ॥ दिनमानघटीभिस्ता
घटिभ्यो राहुसूर्ययोः ॥ अधिकाश्चेत्तदा चन्द्रदर्शनं प्रतिपद्यते ॥ २३१ ॥ अथ चन्द्रस्य शृंगोन्नति-
स्तत्फलम् ॥ चन्द्रो याम्योन्नतो मीनमेषगोऽभ्युदितो मतः ॥ समशृंगो वृषे कुंभ शेष भेषूत्तरोन्न-
तः ॥ २३२ ॥ याम्योन्नते च दुर्भिक्षं विधुरं स्यात्समे विधौ ॥ सुभिक्षं सौम्यदिग्भागे चोन्नते मृग-
लांछने ॥ २३३ ॥ शूलाकारे विधौ भीतिः प्रोदिते महती मता ॥ २३४ ॥ अथ रवेर्वामदक्षिणभा-
गयोश्चन्द्रोदयफलम् ॥ यदि शुक्लद्वितीयायां वामे चन्द्रोदयो रवेः ॥ शुभं तदाऽखिले मासि
नो शुभं दक्षिणोदये ॥ २३५ ॥ चन्द्रोदये बृहत्संज्ञे भवेद्धान्यं समर्घकम् ॥ जघन्यभे महर्घं च ज्ञे-
यं धान्यं समे समम् ॥ २३६ ॥ अथ प्रतिमासे दर्शफलम् ॥ शुभवारान्विते दर्शे स्यात्सुभिक्षं
प्रजासुखम् ॥ पापवारान्विते दुःखं तथा धान्यमहर्घता ॥ २३७ ॥ अथैकमासे पञ्चवारफल-
म् ॥ शुक्लाद्यमासि चेत्पंच पापखेटस्य वासराः ॥ प्रजापीडा भवेत्तत्र धान्यस्यापि महर्घता

 

॥२३८॥ मासे पंच शुभावारा यद्येकस्मिन् प्रजायते॥ सुभिक्षं सर्वसस्यानां तदा सर्वः सुखीजनः
॥२३९॥ अथ प्रतिमासं संक्रांतिवशात्समर्घ महर्घ ज्ञानम्॥ सुभिक्षं संक्रमे सौम्ये वारेऽधिक-
मुहूर्तके॥ महर्घं पापवारे वा मुहूर्ते चाक्षभू १५ मिते॥ २४०॥ पूर्वसंक्रमभाद्द्वित्रिमितं भे संक्रमे
रवेः॥ सुभिक्षं स्याच्चतुः पंच मिते भे च महर्घता॥२४१॥ षष्ठे भे संक्रमे चाति दुर्भिक्षं रौरवं भवेत्
॥२४२॥ अथ ग्रीष्मशारदधान्य निष्पत्ति ज्ञानम्॥ वृषसंक्रमगो भानोः केन्द्रस्वाय १।४।७।१०
।२।११। गतैः शुभैः॥ शारदी धान्य निष्पत्तिरुत्तमा कथिता बुधैः॥२४३॥ पापैरवस्थितैः स्व-
ल्पा मिश्रै र्मिश्रा प्रकीर्तिता॥ पापे द्यून ७ गते नश्येदुत्पन्नमपि सस्यकम्॥२४४॥ द्यून शत्रु-
७।६। गते पापे निष्पत्तिः स्वल्पका भवेत्॥ इत्थं वृश्चिकसंक्रांतौ विज्ञेयं ग्रैष्म धान्यकम्॥
२४५॥ अथ संग्रह समयः॥ चापादि त्रितये सूर्ये सौम्ये युक्ते क्षिते ग्रहैः॥ शरद्धान्यं समर्घः
स्यात्संग्राह्यं तद्धान्यजीविभिः॥२४६॥ पापैर्युक्ते क्षिते धान्यं महर्घं जायतेऽखिलम्॥ एवं मेष-
 त्रिते ग्रैष्मे त्रिधा ज्ञेयं विचक्षणैः॥२४७॥ अथ संक्रांति वशाद्दर्शपौर्णमासयोरुत्पातादिव- 
शाद्धान्यादीनां समर्घता ज्ञानम्॥ ग्रैष्मं सस्यं ततो मूलं २ रसधान्यं ३ घृतादिकम् ४॥ हेमा-

द्यं ५ तुरगो ६ वस्त्रं ७ मणि ८ काचा ९ मधु १० धान्यके ११ ॥ २४८ ॥ मूलं १२ चक्रमतो ज्ञेयं मेषा-
द्यर्केऽखिलेक्षिते। दर्शे वा पूर्णिमायां चेदुपरागोऽतिवर्षणाम् ॥ २४९ ॥ परिवेषस्तथा दण्डउ-
ल्कापाताद्युपद्रवाः ॥ जायंतेऽत्र तदा तेषां वस्तूनां च महर्घता ॥ रवौ सौम्येक्षिते ज्ञेया तुल्या-
तोऽत्र महर्घता ॥ २५० ॥ अथ वृक्षादौ फलाद्यैर्धान्यादिनिष्पत्ति वृष्टिज्ञानम् ॥ वृक्षादौ बहु-
भिः पुष्पैर्महा वृष्टिः प्रजायते ॥ यत्र स्वल्पतरा वृष्टिर्दूर्वाभिश्चेक्षवोऽधिकाः ॥ २५१ ॥ मधूकै-
र्बहुगोधूमा यवाः स्युर्वटजैः फलैः ॥ सुभिक्षं नागनिंबैः स्याच्छाल वृक्षैस्तु शालयः ॥ २५२ ॥
अश्वत्थादधिकं धान्यमर्जुनादधिकं जलम् ॥ क्षेममाम्रैश्च पालाशैः कोद्रवा जंबुतस्तिलाः
॥ २५३ ॥ दुर्भिक्षं खादिरे रोगाः कुटजाः परिकीर्तिताः ॥ २५४ ॥ अथाषाढ्यां पौर्णमास्यां वा-
यु परीक्षा ॥ आषाढे पूर्णिमायां च प्रदोषे वा दिवानिशम् ॥ प्राच्यां वायोस्तु वृष्टिः स्याद्धा-
न्यनिष्पत्तिरुत्तमा ॥ २५५ ॥ अल्पवृष्टिस्तथाग्नेय्यामग्नेर्भीतिर्महर्घता ॥ अनावृष्टिर्भवेद्या-
म्यां प्रजापीडा महर्घता ॥ दुर्भिक्षं रौरवं घोरमनावृष्टिश्च नैर्ऋते ॥ २५६ ॥ वारुण्यां च महा- १९६
वृष्टिर्धान्योत्पत्तिस्तु मध्यमा ॥ वायौ वायुः प्रचंडः स्याद्वृष्टिर्धान्यं च मध्यमम् ॥ २५७ ॥ बहुधा-

न्यं शुभा वृष्टिरुत्तरस्यां सुखी जनः ॥ ऐशान्यां सस्यसंपत्तिर्धनाढ्याः सुखिनो जनाः २५८ 
अथाषाढ्यां धान्यादितोलनम् ॥ आषाढ्यां सर्वधान्यानि संध्यायां च पृथक् पृथक् ॥ तो-
लयेद्वर्णमानेन जलादीनपि सर्वशः ॥ २५९ ॥ मंत्रैस्ततोऽभिमंत्र्यार्थ निशि तानधिवासयेत्
तोलयेच्च पुनः प्रातस्तेन मानेन दैववित् ॥ २६० ॥ वृद्धौ वृद्धिः समे साम्यं ह्रासे हानिस्तु तस्य च
॥ २६१ ॥ अथ होलिका वात परीक्षा ॥ होलिका समये वायौ पूर्वे भूप नृणां सुखम् ॥ याम्य-
नैर्ऋत्य दिग्भागे दुर्भिक्षं च पलायनम् ॥ २६२ ॥ प्रतीच्यामुत्तरे चैव सुभिक्षं स्यात्प्रजा सुखम्
अग्नेर्भीतिरथाग्नेय्यां वायव्यां बहवोनिलाः ॥ २६३ ॥ अथ वृष्टि ज्ञानार्थ मेघ गर्भ ज्ञानम् ॥
मार्गे शुक्लादितो ज्ञेयो मेघगर्भसमुद्भवः ॥ तुहिनात्परिधेर्वृष्ट्यां संध्यारागात्तथापि वा २६४
पौषेऽति शीतितो माघे संध्याभ्रादनिलादपि ॥ फाल्गुने ताम्रवर्णार्कात्स्निग्धाभ्राद्धारवानि-
लात् ॥ २६५ ॥ चैत्रे तु परिधेर्वृष्ट्या वायुना वाभ्ररेखया ॥ २६६ ॥ अथ केषांचिन्मतान्तरम् ॥
 केचिन्मार्गादिमासेषु प्रोचुर्गर्भस्य लक्षणम् ॥ गर्जनात्पवनात्तोय वर्षणाद्विद्युतोऽथवा ॥ 
२६७ ॥ अथ शुभगर्भ लक्षणानि ॥ श्वेतनीलांडजा प्रायेन चाति विगलज्जलाः ॥ स्वस्तग-

र्मोश्चते मेघा उदगीशान पूर्वजाः ॥ २६८ ॥ वृष्टिं प्रयांति ते गर्भा विद्युद्वाताभ्रगर्जितैः ॥ आ-
र्द्राषाढाद्वयोत्पन्ना विशाखोत्था बहूदकाः ॥ २६९ ॥ अथ गर्भधारणादिना वृष्टिज्ञानम् ॥
वृष्टिर्गर्भाह्नमारभ्य पक्षैर्विश्वमिते १३ भवेत् ॥ रात्रिगर्भे दिवा वृष्टिर्दिवागर्भे निशि स्मृता ॥
२७० ॥ अथ प्रकारांतरेण गर्भाह्वाद्वृष्टिज्ञानम् ॥ आरभ्यैकादशीं कृष्णामूर्ज्जात्कादीन्माघमा-
सके ॥ द्वादशस्वपि पक्षेषु विद्युद्वाताभ्रगर्जितैः ॥ २७१ ॥ रोहिण्यादिषु सूर्यस्य भेषु वृष्टि-
र्भवेत्क्रमात् ॥ अथ पुनरन्यप्रकारेण मेघगर्भज्ञानं वृष्टिज्ञानं च ॥ मूलर्क्षे भास्करे याते तदा-
रभ्य दशाहकम् ॥ विद्युदभ्रादिना गर्भो यत्र यत्र दिने भवेत् ॥ क्रमादार्द्रादिनक्षत्रे भानौ वृष्टिः
प्रजायते ॥ २७२ ॥ अथ प्रकारांतरम् ॥ मूलभाद्भरणीयावद्भेषु चैकादशस्वपि ॥ पौषे मासि
दिनर्क्षेषु गर्भस्त्वभ्रादिना भवेत् ॥ २७३ ॥ तत आर्द्रादिगे सूर्ये क्रमाद्वृष्टिः प्रजायते ॥ २७४ ॥
पुनः प्रकारांतरम् ॥ अश्विन्यादिषु धिष्ण्येषु चैत्रे दशसु चेद्भवेत् ॥ अभ्रादिकं तदा गर्भ आर्द्रादौ
वृष्टिदः क्रमात् ॥ २७५ ॥ मेषार्कदिनमारभ्य ज्ञेयमेवमथापि वा ॥ २७६ ॥ अथ सामान्यतो- 
वृष्टिज्ञानम् ॥ यदि साभ्रं नभो माघ्यां सुभिक्षं च भवेद्ध्रुवम् ॥ यद्यभ्रं दृश्यते व्योम्नि चैकादश्यां

सु॰ग॰ तुकार्तिके ॥ २७७॥ आषाढे मासि वृष्टिश्च तदा भवति भूयसी ॥ मार्गाष्टम्यां यदा विद्युद्व-
१९९ र्षणं श्रावणे तदा ॥ २७८॥ पौषे कृष्णे दशम्यां चेद्वृष्टिर्भाद्रपदे तदा ॥ सप्तम्यां माघ शुक्ले स्या- १९९
द्भवेदश्वादिकं तदा ॥ २७९ ॥ ज्येष्ठे मूलेन चेद्वृष्टिः सुवृष्टिर्बहुला तदा ॥ २८० ॥ अथ ज्येष्ठ शुक्ला-
ष्टम्यादि दिन चतुष्टये वायु फलम् ॥ ज्येष्ठेष्टम्यां तु शुक्लायां चतुर्षु दिवसेषु च ॥ श्रावणादौ क्र-
माद्वृष्टिर्मन्दैः शस्तैः समीरणैः ॥ २८१ ॥ अथ स्वात्यादिषु वृष्टौ श्रावणादावनावृष्टिः ॥ ज्येष्ठे
चतुर्षु धिष्ण्येषु स्वातीमारभ्य वर्षणे ॥ क्रमाच्छ्रावणतो वृष्टिर्नो भवेत्तत्र तत्र च ॥ २८२ ॥ आ-
षाढ द्वितीयादिषु चतुर्षु फलम् ॥ आषाढे मासि शुक्लायां द्वितीयायां प्रवर्षणे ॥ तृतीया-
यां पुरो वायुर्मेघो वा पूर्वदिग्गतः ॥ २८३ ॥ चतुर्थ्यां जलदः प्राच्यां दक्षिणे यदि मारुतः ॥ पंच-
म्यां पूर्वदिङ्मेघस्तदा श्रावणमारुतः ॥ २८४ ॥ ध्रुवं वृष्टिः शुभा ज्ञेया क्रमान्मास चतुष्टये ॥
चतुर्ष्वेषु दिनेष्वेवं यदि वृष्टिर्निरंतरम् ॥ २८५ ॥ तदा स्यादीति वृष्टिश्च धान्यनाशः प्रजायते ॥
१९९ याम्यप्रत्यग्भवे वायौ ह्यहं दुर्भिक्षमीरितम् ॥ २८६ ॥ तृतीया पंचमी घस्रे यद्युदक्पूर्वजो । १९९
मरुत् ॥ तदा स्याद्धान्यनिष्पत्तिर्बहुला वृष्टिरुत्तमा ॥ २८७ ॥ अथ श्रावण शुक्ल पंचमी

फलम् ॥ पंचस्याः श्रावणे शुक्ले ह्यहं वृष्टिर्भवेद्यदि ॥ याम्य प्रत्यग भखे वा सुदुर्भिक्षं जायते
तदा ॥ २८८ ॥ अथ सूर्यस्य रेवत्यादिषु नक्षत्रेषु वृष्टेः फलम् ॥ रेवत्यां वर्षणे तायं नश्येद्धा-
न्य मघाऽश्विभे ॥ भरण्यायान्तद्भूयं वृष्टिः कृत्तिकायां न चेद्रविः ॥ २८९ ॥ रोहिण्यां गर्जिते
वृष्टिर्ज्ञेया मास द्वयोत्तरम् ॥ मृगशीर्षे यदा न स्याद्भवेद्दृष्टिर्बहूदका ॥ २९० ॥ अथ संक्रांति
दिने वृष्टि फलम् ॥ संक्रान्ति दिवसे वृष्टो मार्ग कार्तिकयोर्यदा ॥ वर्षंतन्मध्यमं ज्ञेयं पौषे-
मासे तु चोत्तमम् ॥ २९१ ॥ सुभिक्षं च शुभा वृष्टिः फाल्गुनादि चतुष्टये ॥ रोगश्चाषाढमासे
स्याच्छ्रावणे वृष्टिरुत्तमा ॥ भाद्रे रोगस्तथा सौख्यमाश्विने वर्षणं भवेत् ॥ २९२ ॥ अथ का-
क नीड फलम् ॥ स्व गृहात्काक नीडं स्यात्प्रतीच्यां वृष्टिरुत्तमा ॥ उदग्याम्ये भयं मध्ये नै-
र्ऋतावंति मास्मृता ॥ २९३ ॥ अल्प वृष्टिस्त्वथाग्नेय्यां सदन्नं स्याच्छिवे निले ॥ मध्ये मध्या-
य वृक्षाग्रे बहुला वृष्टिरीरिता ॥ २९४ ॥ इति भीतिर्महाघोरा नीडे सर्व दिशागते ॥ नीडे सं-
कराटके भीतिरसोनं जायते ध्रुवम् ॥ २९५ ॥ प्रागुदक्पश्चिमार्द्रस्ये सुवृष्टिः कैश्चिदीरिता २००
॥ २९६ ॥ अथ टिट्टि भांड फलम् ॥ स्थिते श्रृच्च प्रदेशां सु टिट्टि भांडेषु चोत्तमा ॥ वृष्टिः संजा-

यते मासे रधो वत्क्वाराड संरव्यके: ॥ २९७ ॥ निम्न प्रदेशे संस्थेसु स्वल्या वृष्टिः प्रजायते ॥
वृष्टि नैव भवेन्मासे चोर्ध्ववत्क्वाराड संरव्यके ॥ २९८ ॥ अथ रोहिराी चक्रम् ॥ द्वादशांशं-
लिरवे च्चक्रं मेष संक्रान्ति भादितः ॥ चतुर्दिक्षु समुद्राश्च चतुष्कोरागेसु पर्वताः ॥ २९९ ॥ स-
मुद्र पार्श्वयोरष्टौ तापस्त च्छैलयोस्तथा ॥ मध्ये ऽष्टौ संधयस्त च्च साभिजिड्डगराांन्यसेत् ॥
३०० ॥ द्वयं द्वयं समुद्रेसु तथैकै कन्तटादिषु ॥ रोहिराी संस्थिता यत्र ज्ञेयं वृष्टिफलं ततः ॥
३०१ ॥ तटेसु शोभना वृष्टि र्महावृष्टिस्तु सागरे ॥ अनावृष्टि र्गिरौ देशे रवराड वृष्टिस्तु संधिषु
॥ ३०२ ॥ अथ सप्त नाडी चक्रम् ॥ कृत्तिकादि लिरवेच्चक्रं साभिजित्सप्त नाडिकम् ॥ चंडा १
वायु २ स्तथा वह्निः ३ सौम्या ४ नीरा जला: ६ स्मृता: ७ ॥ ३०३ ॥ नाडीनां सप्तनामानि ज्ञे-
यान्येतानि पराडितै: ॥ क्रमान्मन्दार्क भौमेज्य शुक्र ज्ञाब्जा स्तदीश्वराः ॥ ३०४ ॥ अथैत-
देवस्पष्टयति ॥ चराडारव्या भरराी द्वन्द्वं विशारवा द्वितयं शनेः ॥ ज्येष्ठा शिवरोहिराी स्वाती
वायु नाडी रवे: स्मृता ॥ ३०५ ॥ चित्रा मूलो मृगोऽत्यं च दहनारव्या कुजस्य च ॥ पूर्वाषाढाक-
रो भाद्रा सौम्या नाडी बृहस्पते: ॥ ३०६ ॥ पूर्भोषा च पुनर्धिष्ठाय मुफानीरा भृगो: स्मृता ॥ पू-

फाशतभिजित्पुष्यंजलनाडीबुधस्यसा ॥ ३०७ ॥ श्रवद्द्वयंमघाश्लेषाइन्दोरमृतनाडिका
॥ ३०८ ॥ अथैतासु ग्रहेषु संस्थितेषु फलम् ॥ ह्यायायद्येकनाडीस्थाः सौम्याः पापाश्च खे-
चराः ॥ तयोर्नाडी फलंवाच्यंसदसद्वाविचक्षणैः ॥ ३०९ ॥ चण्डनाड्यांमहावातानवात
नाड्यांतथाऽनिलम् ॥ वह्निनाड्यांस्थितादाहंसौम्यनाड्यामथाभ्रकम् ॥ ३१० ॥ नीरना-
ड्यांपयोवृष्टिर्जलनाड्यांचवर्षणम् ॥ कुर्वंत्यमृतनाड्यांच महावृष्टिर्नभश्चराः ॥ ३११ ॥
एकोपि निजनाडिस्थोधत्ते तत्तत्फलंग्रहः ॥ कुजस्तु सर्वनाडीषु स्थितोनाडीसमुद्भवम् ॥
३१२ ॥ आर्द्राद्यर्क्षगते सूर्य्येनाड्यैक्ये फलमुच्यते ॥ यद्दिने चैकनाडीस्थाः पापाः सौम्या
श्च खेचराः ॥ ३१३ ॥ मिश्राश्चन्द्रसमायुक्तास्तद्दिने वृष्टिरुत्तमा ॥ तोयराश्यंशगा मिश्रा-
स्तावद्वृष्टिं प्रकुर्वते ॥ ३१४ ॥ यावत्तोयांशगश्चन्द्रः केवलः स्वल्पवृष्टिदाः ॥ एभिश्च खेच-
रैः सौम्यैः पापैर्विद्धोयदाशशी ॥ ३१५ ॥ पानीयंचतदातुच्छं धान्यादीनांचनाशनम् ॥
यस्य खेटस्यनाडिस्थोविधुस्तेन ग्रहेण च ॥ ३१६ ॥ युक्तश्चेद्वृष्टिदोज्ञेयोयदिक्षीणतरोन- २०२
हि ॥ चन्द्रः पीयूषनाडीस्थो मिश्रैः खेटैश्च संयुतः ॥ ३१७ ॥ त्रिचतुःसप्तपंचाहं शुभवृष्टि-

प्रदो भवेत् ॥ जलनाडीस्थिते चन्द्रे मित्रखेचरसंयुते ॥ ३१८ ॥ दिनार्द्धं प्रत्यहं वृष्टिः पंचाहं
जायते शुभा ॥ नीरनाड्यांगते चन्द्रे मिश्रैः खेटैश्च संयुतः ॥ ३१९ ॥ पादोनत्रिदिनं वृष्टिर्बहुतोया
भवेच्छुभा ॥ नीराख्यं जलपीयूषनाडीस्था खेचराः क्रमात् ॥ ३२० ॥ धृत्य १८ र्क १२ रस ६ संख्या-
कान् वासरान् बहुवृष्टिदाः ॥ सौम्यनाडीस्थिताः सर्वेऽप्यहं वृष्टिप्रदाः खगाः ॥ चन्द्रवाय्वग्नि
नाडिस्था महावातातपप्रदाः ॥ ३२१ ॥ योगे शुभाधिके नाडी निर्जलापि जलप्रदा ॥ योगे क्रू-
राधिके ज्ञेया सजला निर्जला बुधैः ॥ ३२२ ॥ सौम्यनाड्यां स्थिताः पापा घ्नना वृष्टिकरा मताः
शुभास्तोयांशकाश्चेत्स्युः स्वल्पवृष्टिप्रदास्तदा ॥ ३२३ ॥ एकनाडीस्थिता भौमजीवचन्द्र-
मसो यदि ॥ वारिपूर्णा भवेत्पृथ्वी बहुवृष्ट्या तदाऽखिला ॥ ३२४ ॥ भृगुसौम्यौ यदैकत्रस्था-
तां जीवान्वितौ तदा ॥ वृष्टिः स्याद्व्याकुला कस्माच्चन्द्रयोगो विशेषतः ॥ ३२५ ॥ भृगुचन्द्रमसो
पापैः खेचरैर्यदि संयुतौ ॥ तदा स्वल्पोदका वृष्टिर्जलयोगे महत्यपि ॥ ३२६ ॥ अथ शुक्रास्थि-
तिवशाद्ग्रहयोगाच्च वृष्टिज्ञानम् ॥ मघादिपंचधिष्ण्यस्थः शुक्रः प्रागुदितो निशाम् ॥ वृष्टि- 
कृत्पश्चिमाशास्थः स्वात्यादित्रितये स्थितः ॥ ३२७ ॥ वैपरीत्यमितो याता भृगुः कुर्याद्वर्ष-

राम्॥ कुर्वांति बहुलां वृष्टिं बुधशुक्रौ च संयुतौ॥ समुद्रशोषणो सक्तस्तयोरन्तर्गतो रविः॥
३२८॥ शुक्रात्सप्तमगश्चन्द्रो वृष्टिदः स्याच्छुभेक्षितः॥ मन्दाद्वाद्यून ७ कोणस्थ ५।९ श्चन्द्र-
मा वृष्टिकृत्तदा॥ ३२९॥ ग्रहाणामुदये चास्ते राश्यन्तरगमेयने॥ संयोगे वाथ पक्षांते प्रायो-
वृष्टिः प्रजायते॥ ३३०॥ उदये वाक्पतेर्दृष्टी राशिभांतरगे कुंजे॥ शुक्रे चास्तमिते मन्दे त्रिवि-
धेपि प्रजायते॥ ३३१॥ भौमार्की एकराशौ चेदन्योन्यं समसप्तमौ॥ गुरुशुक्रौ कुजार्कौ वावि-
दुश्चावर्षणां तदा॥ ३३२॥ अथार्द्रादिरविनक्षत्रे स्त्रीपुंयोगादौ वृष्टिज्ञानम्॥ स्त्रीसंज्ञानिद-
शार्द्रातो भानि प्रोक्तानि कोविदैः॥ विशाखा त्रितयं क्लीवं पुंसंज्ञानीतराणि च॥ ३३३॥
रवेर्धिष्ण्यप्रवेशस्य काले चन्द्रार्कयोः शुभे॥ धिष्ण्ये च यादृशे स्यातां विज्ञेयं तद्वशात्फल-
म्॥ ३३४॥ स्त्रीपुंसयोर्महावृष्टिरल्पा स्त्रीक्लीवयोः क्वचित्॥ अभ्रच्छाया स्त्रियोः पुंसोः क्ली-
वयोर्वा न किंचन॥ ३३५॥ तोयचारिविलग्ने च वृष्टियोगे यदा रवेः॥ नक्षत्रस्य प्रवेशः स्यात्त-
दा वृष्टिः सुशोभना॥ ३३६॥ निशायामर्धरात्रे वा रवेर्ऋक्षप्रवेशने॥ बहुतोया सुवृष्टिः स्याद- २०४
न्यथा नैव जायते॥ ३३७॥ अथ सूर्यचन्द्रर्क्षयोगे वृष्टिज्ञानम्॥ आर्द्रादिपञ्चकं पूषारेव-

त्यादि चतुस्टयम् ॥ पूर्वाषाढा चतुष्कं च चन्द्रर्क्षाणि चतुर्दश ॥ ३३८ ॥ शेषाणि रविधिष्ण्या-
नि विज्ञेयानि मनीषिभिः ॥ सूर्य्ये चन्द्रर्क्षगे वृष्टिश्चन्द्र सूर्य्यर्क्षगे सति ॥ ३३९ ॥ पूभादिपं-
चके सूर्य्ये चन्द्रे चन्द्रर्क्षगेऽपि च ॥ उभे चन्द्रर्क्षगौ स्यातां स्वल्पा वृष्टिस्तदा भवेत् ॥ ३४० ॥ तावे-
वयदि सूर्य्यर्क्षे ततो वृष्टिर्न जायते ॥ ३४१ ॥ अथ वर्षाकाले सद्यो वृष्टिलक्षणानि ॥ नभः का-
काराड भंगो हड्डि·भंति तित्तिरसन्निभम् ॥ प्रांत्योजलावा मेघाः स्युर्गिरिकज्जलसन्निभाः ३४२
जलजन्तु समाकारा गूलाभ्रा सव्यगा अपि ॥ गिरयोंजनसंकाशा सवाष्प शिखिनर्तनम् ३४३
शुकनेत्रनिभक्षौद्रसन्निभाः सलिलस्रुतः ॥ सन्निधौ परिवेषाश्च चन्द्रस्य शीघ्रवृष्टिकृत् ३४४
विकृतिर्लक्षणो बालाः सेतुबंधोद्यमापथि ॥ जने मीनोत्सवो रावो भेकानां नीरसंजलम् ३४५
व्यालानां मैथुनं वृक्षाद्यारोहः प्रसवस्तथा ॥ मक्षिकानल्यतां यान्ति सांडाः स्यास्तु पिपी-
लिकाः ॥ ३४६ ॥ उत्त्रस्ताश्च गृहाद्गावो नेच्छंति गमनं बहिः ॥ खनंति भूतलं श्वानो मार्जा-
राः पशवः खुरैः ॥ ३४७ ॥ यान्ति वल्ल्यंकुराश्चोर्ध्वं शरदा रोहणोत्तरौ ॥ तृणाग्रवृश्चिकारो-
होगवा मूर्द्ध्व निरीक्षणम् ॥ ३४८ ॥ पक्षिणां धूलिभिः स्नानं प्रदोषे मेघगर्जितम् ॥ अहि- २०५

दक्षिणा कृतिर्मेघः शीतः प्राची भवो मरुत् ॥ ३४९ ॥ प्रत्यगिन्द्रधनुः संध्या रागोऽधो मेघगर्जनम् ॥ प्रागुदक् शैवदिग्जाता रक्ता सौदामिनी तथा ॥ ३५० ॥ सद्ये तीव्रातप श्चाह्नो नगनिद्रालवो भृशम् ॥ विज्ञेयालक्षणैरेभिः सद्यो वृष्टिर्घनागमे ॥ ३५१ ॥ अथोपश्रुति शकुनम् गणाधीशं प्रपूज्यादौ कार्य्यं तस्मै निवेद्य च ॥ साक्षतं सफलं तोय पात्र मादाय संव्रजेत् ॥ ३५२ ॥ उपश्रुति महालक्ष्मी श्चाण्डाल गृह वासिनी ॥ यन्मयाचिन्तितं कार्य्यं सत्यं वद सुरेश्वरि ॥ ३५३ ॥ भवत्या विदितं सर्वं प्राक्र कार्य्ये विशेषतः ॥ इत्युक्ता शृणुयाद्वाणीं शुद्धांवाक्य त्रयान्वितम् ३५४ ॥ प्रक्षिप्य च जलं तत्र समाराध्य तद् मालयम् ॥ तद्वाक्यस्यानुसारेण फलं ज्ञेयं यथार्थतः ॥ ३५५ ॥ अथ वार विशेषः ॥ चाण्डाली भवने सूर्य्ये चन्द्रे नापित मन्दिरे ॥ रजक्या मन्दिरे भौमे बौधने वेश्य मन्दिरे ॥ ३५६ ॥ ब्राह्मण्या मन्दिरे जीवे भार्गवे पराय योषितः ॥ दास्याद्वारि शनौ यायाच्छ्रोतुं चोपश्रुतिं शुभाम् ॥ ३५७ ॥ अथ रघुवंशादि ॥ शकुना रघुवंशस्य दुर्गायानि गमस्यवा ॥ पूजितं पुस्तकं पुष्पै रक्षतैस्त्रफलादिभिः ॥ ३५८ ॥ शनौ संस्थाप्य सूर्य्याह्ने प्रातरेव विलोकयेत् ॥ कुमार्य्योक्त प्रमाणेन।

निष्काश्य श्लोक मुत्तमम् ॥ ३५९ ॥ विज्ञेयाः शाकुनास्तस्माद्यथार्थ वचनाद्धिते ॥ अविस-
र्गांत पूर्वार्द्ध स्तवर्गोत्तर पंचमः ॥ स्तुति लिङ्ग वर्जितः श्लोकः शाकुनेच शुभावहः ॥ ३६० ॥ अथ-
सामुद्रिक परीक्षा ॥ विशाल भालवक्राक्षिवक्षो बाहु करांघ्रिकम् ॥ सद्वृत्त मस्तकं नाभिर्गंभी-
रा नासिकोन्नता ॥ ३६१ ॥ स्निग्ध दन्तत्वचं केशा श्यामा स्निग्धाश्च कुंचिताः ॥ नेत्र प्रान्तारु-
णां स्निग्धं विशालं कृष्ण तारकम् ॥ ३६२ ॥ दक्षावर्त वपूरोमास्निग्ध गंभीर निःस्वनः ॥ सफे-
न मूत्र को धन्यो नरो नोत्पल पार्थिकि ॥ ३६३ ॥ नरो मातृ मुखो धन्यो नारी पितृ मुखी तथा
रक्त मोष्ट नखं पाणि पाद युग्म तलं शुभम् ॥ ३६४ ॥ औदार्य धैर्य गांभीर्य महारम्भ यशः-
प्रियः ॥ प्रसन्न वदनो वंशाभिमानी प्रिय सत्यवाक् ॥ ३६५ ॥ नीतिमान गुरु वाक्यस्थः
शुचिर्दक्षोऽथ पाप भीः ॥ इत्यादि गुणसम्पन्नो नरो भवति भाग्यवान् ॥ ३६६ ॥ रेखाया
तर्जनीयाता तिर्यक्षा सुख्य संज्ञका ॥ तर्जन्यं गुष्ठयोर्मध्ये तिर्यक्वैश्वर्य्य संज्ञका ॥ ३६७ ॥
मणिबन्ध तरैश्वर्य्य रेखा मूलेषु नक्रिया ॥ सारेखा पितृ वंशाख्यात्वच्छिन्ना गेह सौख्यदा ॥ २०७
३६८ ॥ सम्यग्भोगवती चेया मातृ वंशाव वर्द्धनी ॥ आयुः कनिष्ठयो र्मध्ये रेखा कांतकलत्रि-

काः॥ ३६९॥ करभांव्यगता रेखा सा तु मातुलवर्गिका॥ सूक्ष्मा मातृष्वसुः स्थूला मातु-
लस्यैव मन्यतः॥ ३७०॥ अंगुष्ठमूलरेखाभिर्विज्ञेया सन्ततिर्बुधैः॥ सूक्ष्माभिः कन्यकाः
पुत्राः स्थूलाभिश्च तथाविधाः॥ ३७१॥ अच्छिन्नाभिन्नरेखाभिः सन्ततिर्दीर्घजीविनी॥
रेखायाऽनामिका मूले यशः पुरायाभिधा तु सा॥ ३७२॥ धनरेखा तु सा याता मणिबंधात्तु
मध्यमा॥ स्याच्चेदखंडिता पूर्णा सोर्ध्वरेखा तु राज्यदा॥ ३७३॥ गंभीराः सुन्दराः स्निग्धाः
शुभदा मधुपिंगलाः॥ दक्षिणे तु करे पुंसां वामा स्त्रीणां तु वासके॥ ३७४॥ अंगुष्ठांते यवो
यस्य स भवेद्राज्यभाङ्नरः॥ श्रीवत्साश्वरथादर्शध्वजस्तम्भगिरिस्रजः॥ ३७५॥ हस्ति-
श्छत्रांबुजं कुंभः श्रीवत्सकुलिशांकुशम्॥ भृंगारो व्यजनं वीणा यवो मत्स्यादिकं तथा ३७६
करपादतले यस्य स भवेद्धरणीपतिः॥ खल्वाटस्तु धनी विद्वान्दंतुरः संहतांगुलिः ३७७
धनाढ्योल्पवयः शूर उदारो विरलांगुलिः॥ तिलपादतले हस्ते नासायां दृष्टिगोचरः ३७८
हृदि प्रजनने लाभे धनभाग्यप्रदो नृणाम्॥ रेखाः करतले चेत्स्युरुक्ताश्चाप्यधिकास्तथा॥ २०८
३७९॥ सूक्ष्माः सूक्ष्मास्सिताः छिन्नास्तदा स्याच्च दरिद्रता॥ स्थूलं प्रजननं दीर्घं वक्रं वामे वधा-

रााम् ॥ ३८० ॥ यस्य चेत्तदरिद्रः स्याच्छुभलक्षणवानपि ॥ दरिद्रः करयुग्मे न कंडूयति । 
शिरस्तुयः ॥ ३८१ ॥ अथ स्त्रीणां विशेषः ॥ शुभानि यानि चिह्नानि पुंसां प्रोक्तानि सूरिभिः
तान्येव योषितां यात्र विशेषः प्रोच्यते तु सः ॥ ३८२ ॥ नटभ्रू विकटं भालं विशालं प्रोन्नतं तथा
पादांगुलिद्वयं चांत्यं गमनेन स्पृशेद्भुवम् ॥ ३८३ ॥ यस्याः सा विधवा नारी वह्वाहाराशयित-
द्विधा ॥ दीर्घस्फिग्घन्ति भर्तारं दीर्घभाला तु देवरम् ॥ ३८४ ॥ तुन्दादीर्घोदरा नारी श्वशुरं हं-
ति निश्चितम् ॥ स्वल्पगुह्या तथा शुष्का नीतं वायति घातिनी ॥ ३८५ ॥ कुलं दीर्घगला हंति
निःस्वाती ह्रस्वनासिका ॥ पृथुनासा भवेच्चण्डी दुःखिता कसठोदरी ॥ ३८६ ॥ हसिते गर्त्तगं-
डाया दुःशीला सा प्रकीर्तिता ॥ मिलद्भ्रूयुगलावर्तकेशभाला ऽल्पभालिका ॥ ३८७ ॥ दी-
र्घरोमांचिता ग्रीवा लम्बोष्ठी विकरालिका ॥ इत्याद्यैरशुभैश्चिह्नैर्युक्तां नारीं परित्यजेत् ॥
३८८ ॥ अथ स्त्रीणां शुभचिह्नानि ॥ विशाललोचना तन्वी श्यामा मधुरभाषिणी ॥ कृष्णा-
लम्बकचा गौरी श्लक्ष्णगात्रा मनोहरा ॥ ३८९ ॥ हंसेभगमना स्वह्वी चन्द्रवक्त्रा नितंबिनी
 सुचरित्राल्पहारा च गूढगुल्फा कृशोदरी ॥ ३९० ॥ लघुहस्तांघ्रिका कंबुग्रीवा वृत्तोन्नतस्त- 

नी ॥ इत्यादिलक्षणोपेता सुभगा पुत्रिणी शुभा ॥ ३९१ ॥ अथ सामान्यतः शुभलक्षणा-
नि ॥ अर्चितं वचनं चेत श्चोन्नतं सुभगं वपुः ॥ पापं भीरु मतिश्चोक्त चिह्ने रन्येश्च योषिताम् ॥
३९२ ॥ इति श्री महेवज्ञ रावल हरिशंकर सूरिसूनु गणपति कृते मुहूर्त गणपतौ मिश्र प्रक-
रणं समाप्तम् ॥ २१ ॥ ॥ अथ ग्रन्थालंकार वर्णनम् ॥ तत्रादौ राज्ञो वर्णनम् ॥ गौडोर्वी-
प्राशिरो विभूषणमणिर्गोपालदासोऽभवन्मांधाते त्यभिरक्षिताद्य लभत ख्यातिं स दि-
ल्लीश्वरात् ॥ तत्पुत्रो विजयी मनोहर नृपो विद्योतते सर्वदा ॥ दानैर्येन च दान खराड विहितै
र्विश्वेश्वरस्तोष्यते ॥ १ ॥ गांभीर्य प्रौढ गौडान्वय कुमुद गणानन्दि चन्द्राभिरामः ॥ प्रोद्दा-
म स्वच्छ कीर्तिव्रततति पिहित दिङ्मंडली मंडन श्रीः ॥ भूयः सत्यान्नदान प्रणाय शत गुणाख्व-
र्ण भूरर्णाति सार्थः ॥ सर्वार्थावाप्ति धन्यो जगति विजयते मान भूमीश्वरोऽयम् ॥ २ ॥ प्रीत्या
भूभुजदीश पार्थिवतनूराद्वृत्तिभिः कोटिशोयोऽकार्षीत्कनकेन षोडश महादानान्यथा-
न्यानपि ॥ यो धेन्नूर्दश पर्वतांश्च विधिवत्प्रादाद्द्विजेभ्यो मुदा सोऽयं गौड मनोहरो नरपति- २१०
र्वर्वर्ति सर्वोत्तरः ॥ ३ ॥ अथ राजकुमाराणां वर्णनम् ॥ योमूर्तः पुरुषोत्तमस्य तपसां पुरायस्य

 पूरोच्चयो गौड प्रौढ मनोहरेन्द्र नृपतो रानन्दकन्दांकुरः ॥ सकानायकवत प्रियः स्वसुहृदां
 नारीहृद्गां कामवद्राजत्युत्तमरामएष सुचिरं श्रीमान्कुमाराग्रणीः ॥ ४ ॥ शौर्योद्दामलस-
त्प्रताप तपन प्रौढ द्विषद्ध्वात हृत्सर्वार्थी व्रत कल्पवृक्ष सहितः कंदर्पतुल्याकृतिः ॥ गौडोर्वी-
श मनोहर क्षितिपतेर्वंशाम्बुजोद्योतकः श्रीमानुत्तमरामएष युवराड्भास्वानिव भ्राजते ॥ ५ ॥
शौर्योदार्य सुतीक्ष्णधीरधिषणा गांभीर्य शास्त्रज्ञता ॥ देव ब्राह्मण सद्गुरु प्रणयिता वश्यात्म-
ता संपदाम् ॥ एकं धाम निरीक्षितुं विधिरधाद्यं श्रीकुमाराग्रणीः सोयं श्रीपुरुषोत्तमान्वयम-
णेरुद्योत उद्योतने ॥ ६ ॥ श्रीशंभुपूजन सुधापरिपूर्णमूर्त्तेर्गौडाधिनायक मनोहर सिन्धुसा-
रात् ॥ पुराय प्रकाश पुरुषोत्तम सिंह रत्नाद्युद्योत सिंह उदितोऽभ्युदयो विभाति ७ सौजन्यामृ-
त सिन्धुरिन्दु महिमा सौहार्द रत्नाकरः साहित्यादि कलाकलाप कुशलः शैव प्रभावोज्ज्वलः ॥
गौडोर्वीश मनोहरेन्द्र नृपतेः सूनुः कुमारः प्रभो ॥ लक्ष्मी राम कुमार एष जयति प्रौढ प्रतापोज्ज्व-
लः ॥ ८ ॥ अन्वीक्षिक्यां धिषणा निपुणो दण्डनीत्यां प्रचंडो वार्तावृत्तौ सहजकुशलो धर्मसंध- 
र्माधिगामि ॥ षाड्गुण्यादि प्रकृति विहितोपाय चातुर्य धुर्यो लक्ष्मीरामः शिवपदरतः पूर्णकामो

विभाति ॥ ९ ॥ तोषादेषां निखिलजनतानन्दनं ग्रन्थरत्नं ज्योतिर्दीप्तं प्रकरणशरो भूमिभेदैर्व्य-
धायि ॥ सारोद्धारं गणयति विदां चारुगुंफं सुवर्णैरन्तःपूर्णं सकलविदुषां कण्ठयोर्भूषणाय ॥
१० ॥ अथ ग्रन्थकर्तुः कुलपरम्परावर्णनम् ॥ योजन्यैर्गुर्जरेषु द्विजकुलमहितो दिव्यजातीसहस्रः
सच्छीलो शावलाख्यः सकलनृपतिभिः पूजितः श्लाघ्यलक्ष्मीः ॥ भारद्वाजस्य गोत्रे कृतविमलयशा
ब्रह्मनिष्ठो वरिष्ठो ब्रह्मर्षिः ख्यातनामा परइव भगवान् श्रीवशिष्ठो महिष्ठः ॥ ११ ॥ शरद्विमल-
चन्द्रिकाप्रथितकांतिपूरोदधौ यदीययशसां भरैर्दशदिशोभवन्नुज्ज्वला ॥ सुतं खलु यशोधरं
कुलधरां शुभस्यादरात्सदाप्तहरिदर्शनं बुधजना मुदावीवदन् ॥ १२ ॥ आसीत्तस्यात्मजन्मा निग-
मपरदृशां रामदासो निवासो यः प्रश्नादेशवाग्भिर्विरचय निखिलं भूपचक्रं स्ववश्ये ॥ चूडारत्नप्र-
दीपैरवनितलभुजां नित्यनीराजितांघ्रिर्विद्याविद्योतमानो वपुषि परिणते प्राप्य काशीं विमु-
क्तः ॥ १३ ॥ तस्यासीत्तनयोऽबुधेरिव विधुः श्रौताहिताग्निः सदा शांतो दांत उदारधीः सुतपसा-
प्राप्तानुभावाग्रणीः ॥ काशीं प्राप्य विमुक्तिपापखलु यो दैवज्ञतातत्त्ववित्त्वात्मज्ञो हरिशंकरो
मुनिवरोऽद्वैताद्यथार्थाभिधः ॥ १४ ॥ तस्यात्मजः सकलशास्त्रकलाप्रवीणो ज्योतिर्विदः

श्रुतिविदश्च गुरोः प्रसादात् ॥ ग्रन्थ मुहूर्तगणपत्य मिधं विधाय प्रीत्यार्पयच्छिव पदे गणप-
त्यभिज्ञः ॥ १५ ॥ भूरिप्रभेद सु मुहूर्त गणाधिपत्वात्कार्येषु विघ्नहरणाच्च गणेशतुल्यः ॥ विप्रो-
त्तते गणपतिर्द्विजनिर्मितत्वाद्ग्रन्थो मुहूर्त गणपत्य मिधस्त्विवायत् ॥ १६ ॥ विद्यारमासतजया
तिथि पूर्णकामो निव्यूढयोग करणामृत सिद्धिचारः ॥ मौंजी विवाह गृह मंगल मण्डनादौ पूज्यो
मुहूर्तगणपत्य मिधो विभाति ॥ १७ ॥ ज्योतिर्विदा भरणा भव्य वसंतराजज्योति र्निबंध गणा मं-
डन रत्न मालाः ॥ ग्रन्थान्मुहूर्त पद पूर्वक तत्त्व दीप मार्तण्ड चिंतित मणि प्रभु कल्पवृक्षान् १८
सम्यग्विचार्य कृतिनां विदुषां मतेन श्लोकैः प्रसिद्ध सुगमार्थ पदैः प्रणीतः ॥ ग्रन्थो मुहूर्त गणा-
पत्य मिधो गणाज्ञैः प्रीत्या स्वचित सदने परि पूजनीयः ॥ १९ ॥ अत्रागमान्तर गतं खलु यद्र-
हस्यं तद्वर्णितं सुजन शिष्य दया वशेन ॥ नासूयकाय कुटिलाय च नास्तिकाय शुश्रूषया
विरहिताय कदापि दद्यात् ॥ २० ॥ चूडा भूपाब्द कस्योरविशशिनयन च्छायनद्वन्द्व कुम्भो
मासैः सत्कर्णवाहु भंगणा करणा सद्योग संक्रान्ति मालः ॥ रत्नालंकार वस्त्रोपनय परिणा- २१३
योद्यन्मुहूर्तालि शुंडो यात्रा दन्तोध्य मिश्र प्रकरणा कुसुमोत्तंस दूर्वांकुराच्च ॥ २१ ॥ वारंवारं

प्रवृत्तातिथिकृतविजयानन्दयोगादिसिद्धियंत्राधानप्रतिष्ठाजनिविधिमहितो नाम
 संस्कारकांतः ॥ वास्तुप्रासादशोभाहृतस्वगिरा परशुचिरेष्टियातायवादैः ख्यातो राजाभि-
षेकाज्ञयति गणपतिः सन्मुहूर्त्तावलीनाम् ॥ २२ ॥ नेत्रांभोधिधराधरक्षितिमिते १७४२
श्रीविक्रमार्केशके माघेमासि वसन्तपञ्चमितिथौ चन्द्रेऽथमीनस्थिते ॥ सूनुः श्रीहरिशंकर
स्य विदुषः श्रौताहिताग्नेर्मुदा ॥ शीघ्रं शंकरपूजनाद्गणपतिर्ग्रन्थं समापूरयत् ॥ २३ ॥ शिवधा
मान्वितो ग्रन्थः प्रत्यर्थं सन्मुहूर्त्तदः ॥ भुवनेषु प्रसरतात्सौराज्ञोक इवोदितः ॥ २४ ॥ आहिता
ग्नेर्द्विजश्रेष्ठाद्धरिशंकररावलात् ॥ जातो गणपतिश्चाहं समाप्य ग्रन्थमुत्तमम् ॥ २५ ॥ नि-
वेद्य चित्स्वरूपाय शिवाय प्रार्थये चिरम् ॥ वरदोऽयं प्रभोऽभीष्टः सर्वत्र प्रसरत्विति ॥ २६ ॥ अ-
थ ग्रन्थनिर्माणप्रयोजनान्तरमाह ॥ दानैर्विक्रमभोजकर्णान्नृपतीन् शौर्येण वैन्यार्जुनान्
गांभीर्येण सरित्पतिं तुलयतो नीत्या सुराणां गुरुम् ॥ से मान्यं बहुसैन्यपालनगुरोर्भक्त्या
च गौरीपते लक्ष्मीराम विभोर्विभाकररुचेः कान्यस्तुलां रोहति ॥ २७ ॥ श्रीमज्झोडमनोहर- 
क्षितिपतेः प्रीत्या प्रतीत्याधिकः ॥ काव्ये काव्यकलासुधर्मकुशलो यः सर्वशास्त्रार्थवित् ॥

तस्यासीदतिकौतुकेन विदुषां प्रीत्यासुरः प्रेरणा ज्योतिःशास्त्रं विचारणाय सुगमं ग्रन्थो-
न्तु संधीयताम् ॥ २८ ॥ इति नृपतनयं विदित्वा सपदि यमनो विनोदाय ॥ अथ विविध मुहूर्त-
सत्प्रबन्धो गणपति रावल शर्मणा व्यधायि ॥ २९ ॥ वाणी यथा गणपतेः शिवयोगहेतुः ।
काश्यां तथैव हरिशंकर नंदनस्य ॥ एषा मुहूर्त गणपत्यभिध प्रबन्ध प्रादुर्भवा भवतु भूमितले
जनानाम् ॥ ३० ॥ आयुः प्रज्ञा यशः सौख्यं सौभाग्यं फलमक्षयम् ॥ अभीष्टं च पशून् पुत्रान् ल-
भतां ग्रन्थ तत्त्ववित ॥ ३१ ॥ इति श्रीमदग्निहोत्रि चातुर्मास्य याजि समासादित पुरुषार्थ सा-
रार्थ दैवज्ञ रावल हरिशंकर सूरि सूनु गणपति कृते मुहूर्त गणपतौ ग्रन्थालंकार प्रकरणम्

समाप्तम् ॥ ३२ ॥

# अथास्य ग्रन्थस्यानुक्रमणिका लिख्यते